॥ सामवेद संहिता कौथुम शाखा ॥

पूर्वार्चिकः

छन्द आर्चिकः

आग्नेयं काण्डम्

प्रथमः प्रपाठकः । प्रथमोऽर्धः

१ १ १ ०१०१a अग्न आ याहि वीतये गृणानो हव्यदातये ।
१ १ १ ०१०१c नि होता सत्सि बर्हिषि ॥ १
१ १ १ ०१०१a त्वमग्ने यज्ञानाँ होता विश्वेषाँ हितः ।
१ १ १ ०१०२c देवेभिर्मानुषे जने ॥ २
१ १ १ ०१०३a अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
१ १ १ ०१०३c अस्य यज्ञस्य सुक्रतुम् ॥ ३
१ १ १ ०१०४a अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।
१ १ १ ०१०४c समिद्धः शुक्र आहुतः ॥ ४
१ १ १ ०१०५a प्रेष्ठं वो अतिथिँ स्तुषे मित्रमिव प्रियम् ।
१ १ १ ०१०५c अग्ने रथं न वेद्यम् ॥ ५
१ १ १ ०१०६a त्वं नो अग्ने महोभिः पाहि विश्वस्या अरातेः ।
१ १ १ ०१०६c उत द्विषो मर्त्यस्य ॥ ६
१ १ १ ०१०७a एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
१ १ १ ०१०७c एभिर्वर्धास इन्दुभिः ॥ ७
१ १ १ ०१०८a आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।
१ १ १ ०१०८c अग्ने त्वां कामये गिरा ॥ ८
१ १ १ ०१०९a त्वामग्ने पुष्करादध्यथर्वा निरमन्थत ।
१ १ १ ०१०९c मूर्ध्नो विश्वस्य वाघतः ॥ ९
१ १ १ ०११०a अग्ने विवस्वदा भरास्मभ्यमूतये महे ।
१ १ १ ०११०c देवो ह्यसि नो दृशे ॥ १०

१ १ १ ०२०१a नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।
१ १ १ ०२०१c अमैरमित्रमर्दय ॥ ११
१ १ १ ०२०२a दूतं वो विश्ववेदसँ हव्यवाहममर्त्यम् ।
१ १ १ ०२०२c यजिष्ठमृञ्जसे गिरा ॥ १२
१ १ १ ०२०३a उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
१ १ १ ०२०३c वायोरनीके अस्थिरन् ॥ १३
१ १ १ ०२०४a उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम् ।
१ १ १ ०२०४c नमो भरन्त एमसि ॥ १४
१ १ १ ०२०५a जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
१ १ १ ०२०५c स्तोमँ रुद्राय दृशीकम् ॥ १५

१ १ १ ०२०६a प्रति त्यं चारुमध्वरं गोपीथाय प्र हूयसे ।

१ १ १ ०२०६c मरुद्भिरग्न आ गहि ॥ १६

१ १ १ ०२०७a अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।

१ १ १ ०२०७c सम्राजन्तमध्वराणाम् ॥ १७

१ १ १ ०२०८a और्वभृगुवच्छुचिमप्नवानवदा हुवे ।

१ १ १ ०२०८c अग्निँ समुद्रवाससम् ॥ १८

१ १ १ ०२०९a अग्निमिन्धानो मनसा धियँ सचेत मर्त्यः ।

१ १ १ ०२०९c अग्निमिन्धे विवस्वभिः ॥ १९

१ १ १ ०२१०a आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् ।

१ १ १ ०२१०c परो यदिध्यते दिवि ॥ २०

१ १ १ ०३०१a अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।

१ १ १ ०३०१c अच्छा नप्त्रे सहस्वते ॥ २१

१ १ १ ०३०२a अग्निस्तिग्मेन शोचिषा यँसद्विश्वं न्या३त्रिणम् ।

१ १ १ ०३०२c अग्निर्नो वँसते रयिम् ॥ २२

१ १ १ ०३०३a अग्ने मृड महाँ अस्यय आ देवयुं जनम् ।

१ १ १ ०३०३c इयेथ बर्हिरासदम् ॥ २३

१ १ १ ०३०४a अग्ने रक्षा णो अँहसः प्रति स्म देव रीषतः ।

१ १ १ ०३०४c तपिष्ठैरजरो दह ॥ २४

१ १ १ ०३०५a अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः ।

१ १ १ ०३०५c अरं वहन्त्याशवः ॥ २५

१ १ १ ०३०६a नि त्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम् ।

१ १ १ ०३०६c सुवीरमग्न आहुत ॥ २६

१ १ १ ०३०७a अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।

१ १ १ ०३०७c अपाँ रेताँसि जिन्वति ॥ २७

१ १ १ ०३०८a इममू षु त्वमस्माकँ सनिं गायत्रं नव्याँसम् ।

१ १ १ ०३०८c अग्ने देवेषु प्र वोचः ॥ २८

१ १ १ ०३०९a तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः ।

१ १ १ ०३०९c स पावक श्रुधी हवम् ॥ २९

१ १ १ ०३१०a परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् ।

१ १ १ ०३१०c दधद्रत्नानि दाशुषे ॥ ३०

१ १ १ ०३११a उदु त्यं जातवेदसं देवं वहन्ति केतवः ।

१ १ १ ०३११c दृशे विश्वाय सूर्यम् ॥ ३१

१ १ १ ०३१२a कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे ।

१ १ १ ०३१२c देवममीवचातनम् ॥ ३२

१ १ १ ०३१३a शं नो देवीरभिष्टये शं नो भवन्तु पीतये ।

१ १ १ ०३१३c शं योरभि स्रवन्तु नः ॥ ३३

१ १ १ ०३१४a कस्य नूनं परीणसि धियो जिन्वसि सत्पते ।

१ १ १ ०३१४c जोषाता यस्य ते गिरः ॥ ३४

१ १ १ ०४०१a यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
१ १ १ ०४०१c प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शँसिषम् ॥ ३५
१ १ १ ०४०२a पाहि नो अग्न एकया पाह्यू३त द्वितीयया ।
१ १ १ ०४०२c पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥ ३६
१ १ १ ०४०३a बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
१ १ १ ०४०३c भरद्वाजे समिधानो यविष्ठ्य रेवत्पावक दीदिहि ॥ ३७
१ १ १ ०४०४a त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
१ १ १ ०४०४c यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम् ॥ ३८
१ १ १ ०४०५a अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः ।
१ १ १ ०४०५c अप्रोषिवान्गृहपते महाँ असि दिवस्पायुर्दुरोणयुः ॥ ३९
१ १ १ ०४०६a अग्ने विवस्वदुषसश्चित्रँ राधो अमर्त्य ।
१ १ १ ०४०६c आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ ४०
१ १ १ ०४०७a त्वं नश्चित्र ऊत्या वसो राधाँसि चोदय ।
१ १ १ ०४०७c अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ ४१
१ १ १ ०४०८a त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः ।
१ १ १ ०४०८c त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ४२
१ १ १ ०४०९a आ नो अग्ने वयोवृधँ रयिं पावक शँस्यम् ।
१ १ १ ०४०९c रास्वा च न उपमाते पुरुस्पृहँ सुनीती सुयशस्तरम् ॥ ४३
१ १ १ ०४१०a यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
१ १ १ ०४१०c मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥ ४४

१ १ १ ०५०१a एना वो अग्निं नमसोर्जो नपातमा हुवे ।
१ १ १ ०५०१c प्रियं चेतिष्ठमरतिँ स्वाध्वरं विश्वस्य दूतममृतम् ॥ ४५
१ १ १ ०५०२a शेषे वनेषु मातृषु सं त्वा मर्तास इन्धते ।
१ १ १ ०५०२c अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि ॥ ४६
१ १ १ ०५०३a अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
१ १ १ ०५०३c उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥ ४७
१ १ १ ०५०४a अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।
१ १ १ ०५०४c ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ॥ ४८
१ १ १ ०५०५a अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् ।
१ १ १ ०५०५c अग्निँ राये पुरुमीढ श्रुतं नरोऽग्निः सुदीतये छर्दिः ॥ ४९
१ १ १ ०५०६a श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।
१ १ १ ०५०६c आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ॥ ५०
१ १ १ ०५०७a प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना ।
१ १ १ ०५०७c अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥ ५१
१ १ १ ०५०८a अध ज्मो अध वा दिवो बृहतो रोचनादधि ।

१ १ १ ०५०८c अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥ ५२
१ १ १ ०५०९a कायमानो वना त्वं यन्मातॄरजगन्नपः ।
१ १ १ ०५०९c न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभुवः ॥ ५३
१ १ १ ०५१०a नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
१ १ १ ०५१०c दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥ ५४

प्रथम प्रपाठकः । द्वितीयोऽर्धः

१ १ २ ०६०१a देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
१ १ २ ०६०१c उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ ५५
१ १ २ ०६०२a प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता ।
१ १ २ ०६०२c अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥ ५६
१ १ २ ०६०३a ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता ।
१ १ २ ०६०३c ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥ ५७
१ १ २ ०६०४a प्र यो राये निनीषति मर्तो यस्ते वसो दाशत् ।
१ १ २ ०६०४c स वीरं धत्ते अग्न उक्थशँसिनं त्मना सहस्रपोषिणम् ॥ ५८
१ १ २ ०६०५a प्र वो यह्वं पुरूणां विशां देवयतीनाम् ।
१ १ २ ०६०५c अग्निँ सूक्तेभिर्वचोभिर्वृणीमहे यँसमिदन्य इन्धते ॥ ५९
१ १ २ ०६०६a अयमग्निः सुवीर्यस्येशे हि सौभगस्य ।
१ १ २ ०६०६c राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥ ६०
१ १ २ ०६०७a त्वमग्ने गृहपतिस्त्वँ होता नो अध्वरे ।
१ १ २ ०६०७c त्वं पोता विश्ववार प्रचेता ताक्षि यासि च वार्यम् ॥ ६१
१ १ २ ०६०८a सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।
१ १ २ ०६०८c अपां नपातँ सुभगँ सुदँससँ सुप्रतूर्तिमनेहसम् ॥ ६२

१ १ २ ०७०१a आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम् ।
१ १ २ ०७०१c इडस्पदे नमसा रातहव्यँ सपर्यता यजतं पस्त्यानाम् ॥ ६३
१ १ २ ०७०२a चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे ।
१ १ २ ०७०२c अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्या३ चरन् ॥ ६४
१ १ २ ०७०३a इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व ।
१ १ २ ०७०३c संवेशनस्तन्वे३ चारुरेधि प्रियो देवानां परमे जनित्रे ॥ ६५
१ १ २ ०७०४a इमँ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
१ १ २ ०७०४c भद्रा हि नः प्रमतिरस्य सँसद्यग्ने सख्ये मा रिषामा वयं तव ॥ ६६
१ १ २ ०७०५a मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
१ १ २ ०७०५c कविँ सम्राजमतिथिं जनानामासन्नाः पात्रं जनयन्त देवाः ॥ ६७
१ १ २ ०७०६a वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः ।
१ १ २ ०७०६c तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्ववाहो जिग्युरश्वाः ॥ ६८
१ १ २ ०७०७a आ वो राजानमध्वरस्य रुद्रँ होतारँ सत्ययजँ रोदस्योः ।
१ १ २ ०७०७c अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥ ६९

१ १ २ ०७०८a इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।
१ १ २ ०७०८c नरो हव्येभिरीडते सबाध आग्निरग्रमुषसामशोचि ॥ ७०
१ १ २ ०७०९a प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।
१ १ २ ०७०९c दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध ॥ ७१
१ १ २ ०७१०a अग्निं नरो दीधितिभिरण्योर्हस्तच्युतं जनयत प्रशस्तम् ।
१ १ २ ०७१०c दूरेदृशं गृहपतिमथव्युम् ॥ ७२

१ १ २ ०८०१a अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
१ १ २ ०८०१c यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥ ७३
१ १ २ ०८०२a प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम् ।
१ १ २ ०८०२c नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वार्मणा धनर्चिम् ॥ ७४
१ १ २ ०८०३a शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
१ १ २ ०८०३c विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु ॥ ७५
१ १ २ ०८०४a इडामग्ने पुरुदँसँ सनिं गोः शश्वत्तमँ हवमानाय साध ।
१ १ २ ०८०४c स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥ ७६
१ १ २ ०८०५a प्र होता जातो महान्नभोविन्नृषद्मा सीददपां विवर्ते ।
१ १ २ ०८०५c दधद्यो धायी सुते वयाँसि यन्ता वसूनि विधते तनूपाः ॥ ७७
१ १ २ ०८०६a प्र सम्राजमसुरस्य प्रशस्तं पुँसः कृष्टीनामनुमाद्यस्य ।
१ १ २ ०८०६c इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु ॥ ७८
१ १ २ ०८०७a अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः ।
१ १ २ ०८०७c दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥ ७९
१ १ २ ०८०८a सनादग्ने मृणसि यातुधानान्न त्वा रक्षाँसि पृतनासु जिग्युः ।
१ १ २ ०८०८c अनु दह सहमूरान्कयादो मा ते हेत्या मुक्षत दैव्यायाः ॥ ८०

१ १ २ ०९०१a अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो ।
१ १ २ ०९०१c प्र नो राये पनीयसे रत्सि वाजाय पन्थाम् ॥ ८१
१ १ २ ०९०२a यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः ।
१ १ २ ०९०२c आजुह्वद्धव्यमानुषक्षर्म भक्षीत दैव्यम् ॥ ८२
१ १ २ ०९०३a त्वेषस्ते धूम ऋण्वति दिवि सं च्छुक्र आततः ।
१ १ २ ०९०३c सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ८३
१ १ २ ०९०४a त्वँ हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।
१ १ २ ०९०४c त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ ८४
१ १ २ ०९०५a प्रातरग्निः पुरुप्रियो विष स्तवेतातिथिः ।
१ १ २ ०९०५c विश्वे यस्मिन्नमर्त्ये हव्यं मर्तास इन्धते ॥ ८५
१ १ २ ०९०६a यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो ।
१ १ २ ०९०६c महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ८६
१ १ २ ०९०७a विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
१ १ २ ०९०७c अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ ८७

१ १ २ ०९०८a बृहद्वयो हि भानवेऽर्चा देवायाग्नये ।
१ १ २ ०९०८c यं मित्रं न प्रशस्तये मर्तासो दधिरे पुरः ॥ ८८
१ १ २ ०९०९a अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
१ १ २ ०९०९c य स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ॥ ८९
१ १ २ ०९१०a जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः ।
१ १ २ ०९१०c पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥ ९०

१ १ २ १००१a सोमँ राजानं वरुणमग्निमन्वारभामहे ।
१ १ २ १००१c आदित्यं विष्णुँ सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ ९१
१ १ २ १००२a इत एत उदारुहन्दिवः पृष्ठान्या रुहन् ।
१ १ २ १००२c प्र भूर्जयो यथा पथोद्यामङ्गिरसो ययुः ॥ ९२
१ १ २ १००३a राये अग्ने महे त्वा दानाय समिधीमहि ।
१ १ २ १००३c ईडिष्वा हि महे वृषं द्यावा होत्राय पृथिवी ॥ ९३
१ १ २ १००४a दधन्वे वा यदीमनु वोचद्ब्रह्मेति वेरु तत् ।
१ १ २ १००४c परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥ ९४
१ १ २ १००५a प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि ।
१ १ २ १००५c यातुधानस्य रक्षसो बलं न्युब्जवीर्यम् ॥ ९५
१ १ २ १००६a त्वमग्ने वसूँरिह रुद्राँ आदित्याँ उत ।
१ १ २ १००६c यजा स्वध्वरं जनं मनुजातं घृतप्रुषम् ॥ ९६

द्वितीय प्रपाठकः । प्रथमोऽर्धः

१ २ १ ०१०१a पुरु त्वा दाशिवाँ वोचेऽरिरग्ने तव स्विदा ।
१ २ १ ०१०१c तोदस्येव शरण आ महस्य ॥ ९७
१ २ १ ०१०२a प्र होत्रे पूर्व्यं वचोऽग्नये भरता बृहत् ।
१ २ १ ०१०२c विपां ज्योतीँषि बिभ्रते न वेधसे ॥ ९८
१ २ १ ०१०३a अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
१ २ १ ०१०३c अस्मे धेहि जातवेदो महि श्रवः ॥ ९९
१ २ १ ०१०४a अग्ने यजिष्ठो अध्वरे देवां देवयते यज ।
१ २ १ ०१०४c होता मन्द्रो वि राजस्यति स्रिधः ॥ १००
१ २ १ ०१०५a जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये ।
१ २ १ ०१०५c अयं ध्रुवो रयीणां चिकेतदा ॥ १०१
१ २ १ ०१०६a उत स्या नो दिवा मतिरदितिरूत्यागमत् ।
१ २ १ ०१०६c सा शन्ताता मयस्करदप स्रिधः ॥ १०२
१ २ १ ०१०७a ईडिष्वा हि प्रतीव्या३ं यजस्व जातवेदसम् ।
१ २ १ ०१०७c चरिष्णुधूममगृभीतशोचिषम् ॥ १०३
१ २ १ ०१०८a न तस्य मायया च न रिपुरीशीत मर्त्यः ।
१ २ १ ०१०८c यो अग्नये ददाश हव्यदातये ॥ १०४
१ २ १ ०१०९a अप त्यं वृजिनँ रिपुँ स्तेनमग्ने दुराध्यम् ।

१ २ १ ०१०९c दविष्ठमस्य सत्पते कृधी सुगम् ॥ १०५
१ २ १ ०११०a श्रुष्ट्यग्ने नवस्य मे स्तोमस्य वीर विश्पते ।
१ २ १ ०११०c नि मायिनस्तपसा रक्षसो दह ॥ १०६

१ २ १ ०२०१a प्र मँहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।
१ २ १ ०२०१c उपस्तुतासो अग्नये ॥ १०७
१ २ १ ०२०२a प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः ।
१ २ १ ०२०२c यस्य त्वँ सख्यमाविथ ॥ १०८
१ २ १ ०२०३a तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
१ २ १ ०२०३c देवत्रा हव्यमूहिषे ॥ १०९
१ २ १ ०२०४a मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एशः ।
१ २ १ ०२०४c यः सुहोता स्वध्वरः ॥ ११०
१ २ १ ०२०५a भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
१ २ १ ०२०५c भद्रा उत प्रशस्तयः ॥ १११
१ २ १ ०२०६a यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
१ २ १ ०२०६c अस्य यज्ञस्य सुक्रतुम् ॥ ११२
१ २ १ ०२०७a तदग्ने द्युम्नमा भर यत्सासाहा सदने कं चिदत्रिणम् ।
१ २ १ ०२०७c मन्युं जनस्य दूढ्यम् ॥ ११३
१ २ १ ०२०८a यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे ।
१ २ १ ०२०८c विश्वेदग्निः प्रति रक्षाँसि सेधति ॥ ११४

॥ इत्याग्नेय पर्वं काण्डम् ॥

ऐन्द्र काण्डम्

१ २ १ ०३०१a तद्वो गाय सुते सचा पुरुहूताय सत्वने ।
१ २ १ ०३०१c शं यद्गवे न शाकिने ॥ ११५
१ २ १ ०३०२a यस्ते नूनँ शतक्रतविन्द्र द्युम्नितमो मदः ।
१ २ १ ०३०२c तेन नूनं मदे मदेः ॥ ११६
१ २ १ ०३०३a गाव उप वदावटे महि यज्ञस्य रप्सुदा ।
१ २ १ ०३०३c उभा कर्णा हिरण्यया ॥ ११७
१ २ १ ०३०४a अरमश्वाय गायत श्रुतकक्षारं गवे ।
१ २ १ ०३०४c अरमिन्द्रस्य धाम्ने ॥ ११८
१ २ १ ०३०५a तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।
१ २ १ ०३०५c स वृषा वृषभो भुवत् ॥ ११९
१ २ १ ०३०६a त्वमिन्द्र बलादधि सहसो जात ओजसः ।
१ २ १ ०३०६c त्वँ सन्वृषन्वृषेदसि ॥ १२०
१ २ १ ०३०७a यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् ।
१ २ १ ०३०७c चक्राण ओपशं दिवि ॥ १२१

१ २ १ ०३०८a यदिन्द्राहं तथा त्वमीशीय वस्व एक इत् ।
१ २ १ ०३०८c स्तोता मे गोसखा स्यात् ॥ १२२
१ २ १ ०३०९a पन्यंपन्यमित्सोतार आ धावत मद्याय ।
१ २ १ ०३०९c सोमं वीराय शूराय ॥ १२३
१ २ १ ०३१०a इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।
१ २ १ ०३१०c अनाभयिन्ररिमा ते ॥ १२४

१ २ १ ०४०१a उद्घेदभि श्रुतामघं वृषभं नर्यापसम् ।
१ २ १ ०४०१c अस्तारमेषि सूर्य ॥ १२५
१ २ १ ०४०२a यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य ।
१ २ १ ०४०२c सर्वं तदिन्द्र ते वशे ॥ १२६
१ २ १ ०४०३a य आनयत्परावतः सुनीती तुर्वशं यदुम् ।
१ २ १ ०४०३c इन्द्रः स नो युवा सखा ॥ १२७
१ २ १ ०४०४a मा न इन्द्राभ्याऽऽ३ दिशः सूरो अक्तुष्वा यमत ।
१ २ १ ०४०४c त्वा युजा वनेम तत् ॥ १२८
१ २ १ ०४०५a एन्द्र सानसिँ रयिँ सजित्वानँ सदासहम् ।
१ २ १ ०४०५c वर्षिष्ठमूतये भर ॥ १२९
१ २ १ ०४०६a इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।
१ २ १ ०४०६c युजं वृत्रेषु वज्रिणम् ॥ १३०
१ २ १ ०४०७a अपिबत्कद्रुवः सुतमिन्द्रः सहस्रबाह्वे ।
१ २ १ ०४०७c तत्राददिष्ट पौँस्यम् ॥ १३१
१ २ १ ०४०८a वयमिन्द्र त्वायवोऽभि प्र नोनुमो वृषन् ।
१ २ १ ०४०८c विद्धी त्वा३स्य नो वसो ॥ १३२
१ २ १ ०४०९a आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।
१ २ १ ०४०९c येषामिन्द्रो युवा सखा ॥ १३३
१ २ १ ०४१०a भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः ।
१ २ १ ०४१०c वसु स्पार्हं तदा भर ॥ १३४

१ २ १ ०५०१a इहेव शृण्व एषां कशा हस्तेषु यद्वदान् ।
१ २ १ ०५०१c नि यामं चित्रमृञ्जते ॥ १३५
१ २ १ ०५०२a इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः ।
१ २ १ ०५०२c पुष्टावन्तो यथा पशुम् ॥ १३६
१ २ १ ०५०३a समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
१ २ १ ०५०३c समुद्रायेव सिन्धवः ॥ १३७
१ २ १ ०५०४a देवानामिदवो महत्तदा वृणीमहे वयम् ।
१ २ १ ०५०४c वृष्णामस्मभ्यमूतये ॥ १३८
१ २ १ ०५०५a सोमानाँ स्वरणं कृणुहि ब्रह्मणस्पते ।
१ २ १ ०५०५c कक्षीवन्तं य औशिजः ॥ १३९

१ २ १ ०५०६a बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः ।
१ २ १ ०५०६c श‍ृणोतु शक्र आशिषम् ॥ १४०
१ २ १ ०५०७a अद्य नो देव सवितः प्रजावत्सावीः सौभगम् ।
१ २ १ ०५०७c परा दुःष्वप्न्यँ सुव ॥ १४१
१ २ १ ०५०८a क्वा३स्य वृषभो युवा तुविग्रीवो अनानतः ।
१ २ १ ०५०८c ब्रह्मा कस्तँ सपर्यति ॥ १४२
१ २ १ ०५०९a उपह्वरे गिरीणाँ सङ्गमे च नदीनाम् ।
१ २ १ ०५०९c धिया विप्रो अजायत ॥ १४३
१ २ १ ०५१०a प्र सम्राजं चर्षणीनामिन्द्रँ स्तोता नव्यं गीर्भिः ।
१ २ १ ०५१०c नरं नृषाहं मँहिष्ठम् ॥ १४४

द्वितीय प्रपाठकः । द्वितीयोऽर्धः

१ २ २ ०६०१a अपादु शिप्रयन्धसः सुदक्षस्य प्रहोषिणः ।
१ २ २ ०६०१c इन्द्रोरिन्द्रो यवाशिरः ॥ १४५
१ २ २ ०६०२a इमा उ त्वा पुरुवसोऽभि प्र नोनवुर्गिरः ।
१ २ २ ०६०२c गावो वत्सं न धेनवः ॥ १४६
१ २ २ ०६०३a अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
१ २ २ ०६०३c इत्था चन्द्रमसो गृहे ॥ १४७
१ २ २ ०६०४a यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः ।
१ २ २ ०६०४c तत्र पूषाभुवत्सचा ॥ १४८
१ २ २ ०६०५a गौर्धयति मरुताँ श्रवस्युर्माता मघोनाम्
१ २ २ ०६०५c युक्ता वह्नी रथानाम् ॥ १४९
१ २ २ ०६०६a उप नो हरिभिः सुतं याहि मदानां पते ।
१ २ २ ०६०६c उप नो हरिभिः सुतम् ॥ १५०
१ २ २ ०६०७a इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे ।
१ २ २ ०६०७c अच्छावभृथमोजसा ॥ १५१
१ २ २ ०६०८a अहमिद्धि पितुष्परि मेधामृतस्य जग्रह ।
१ २ २ ०६०८c अहँ सूर्य इवाजनि ॥ १५२
१ २ २ ०६०९a रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
१ २ २ ०६०९c क्षुमन्तो याभिर्मदेम ॥ १५३
१ २ २ ०६१०a सोमः पूषा च चेततुर्विश्वासाँ सुक्षितीनाम् ।
१ २ २ ०६१०c देवत्रा रथ्योर्हिता ॥ १५४

१ २ २ ०७०१a पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
१ २ २ ०७०१c विश्वासाहँ शतक्रतुं मँहिष्ठं चर्षणीनाम् ॥ १५५
१ २ २ ०७०२a प्र व इन्द्राय मादनँ हर्यश्वाय गायत ।
१ २ २ ०७०२c सखायः सोमपाव्ने ॥ १५६
१ २ २ ०७०३a वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।

१ २ २ ०७०३c कण्वा उक्थेभिर्जरन्ते ॥ १५७
१ २ २ ०७०४a इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।
१ २ २ ०७०४c अर्कमर्चन्तु कारवः ॥ १५८
१ २ २ ०७०५a अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।
१ २ २ ०७०५c एहीमस्य द्रवा पिब ॥ १५९
१ २ २ ०७०६a सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
१ २ २ ०७०६c जुहूमसि द्यविद्यवि ॥ १६०
१ २ २ ०७०७a अभि त्वा वृषभा सुते सुतँ सृजामि पीतये ।
१ २ २ ०७०७c तृम्पा व्यश्नुही मदम् ॥ १६१
१ २ २ ०७०८a य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः ।
१ २ २ ०७०८c पिबेदस्य त्वमीशिषे ॥ १६२
१ २ २ ०७०९a योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
१ २ २ ०७०९c सखाय इन्द्रमूतये ॥ १६३
१ २ २ ०७१०a आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।
१ २ २ ०७१०c सखायः स्तोमवाहसः ॥ १६४

१ २ २ ०८०१a इदँ ह्यन्वोजसा सुतँ राधानां पते ।
१ २ २ ०८०१c पिबा त्वा३स्य गिर्वणः ॥ १६५
१ २ २ ०८०२a महाँ इन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे ।
१ २ २ ०८०२c द्यौर्न प्रथिना शवः ॥ १६६
१ २ २ ०८०३a आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभँ सं गृभाय ।
१ २ २ ०८०३c महाहस्ती दक्षिणेन ॥ १६७
१ २ २ ०८०४a अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
१ २ २ ०८०४c सूनुँ सत्यस्य सत्पतिम् ॥ १६८
१ २ २ ०८०५a कया नश्चित्र आ भुवदूती सदावृधः सखा ।
१ २ २ ०८०५c कया शचिष्ठया वृता ॥ १६९
१ २ २ ०८०६a त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
१ २ २ ०८०६c आ च्यावयस्यूतये ॥ १७०
१ २ २ ०८०७a सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ।
१ २ २ ०८०७c सनिं मेधामयासिषम् ॥ १७१
१ २ २ ०८०८a ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः ।
१ २ २ ०८०८c उत श्रोषन्तु नो भुवः ॥ १७२
१ २ २ ०८०९a भद्रम्भद्रं न आ भरेषमूर्जँ शतक्रतो ।
१ २ २ ०८०९c यदिन्द्र मृडयासि नः ॥ १७३
१ २ २ ०८१०a अस्ति सोमो अयँ सुतः पिबन्त्यस्य मरुतः ।
१ २ २ ०८१०c उत स्वराजो अश्विना ॥ १७४

१ २ २ ०९०१a ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते ।

१ २ २ ०९०१c वन्वानासः सुवीर्यम् ॥ १७५
१ २ २ ०९०२a न कि देवा इनीमसि न क्या योपयामसि ।
१ २ २ ०९०२c मन्त्रश्रुत्यं चरामसि ॥ १७६
१ २ २ ०९०३a दोषो आगाद्बृहद्गाय द्युमद्गामन्नाथर्वण ।
१ २ २ ०९०३c स्तुहि देवँ सवितारम् ॥ १७७
१ २ २ ०९०४a एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः ।
१ २ २ ०९०४c स्तुषे वामश्विना बृहत् ॥ १७८
१ २ २ ०९०५a इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
१ २ २ ०९०५c जघान नवतीर्नव ॥ १७९
१ २ २ ०९०६a इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः ।
१ २ २ ०९०६c महाँ अभिष्टिरोजसा ॥ १८०
१ २ २ ०९०७a आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि ।
१ २ २ ०९०७c महान्महीभिरूतिभिः ॥ १८१
१ २ २ ०९०८a ओजस्तदस्य तित्विष उभे यत्समवर्तयत् ।
१ २ २ ०९०८c इन्द्रश्चर्मेव रोदसी ॥ १८२
१ २ २ ०९०९a अयमु ते समतसि कपोत इव गर्भधिम् ।
१ २ २ ०९०९c वचस्तच्चिन्न ओहसे ॥ १८३
१ २ २ ०९१०a वात आ वातु बेषजँ शम्भु मयोभु नो हृदे ।
१ २ २ ०९१०c प्र न अयूँषि तारिषत् ॥ १८४

१ २ २ १००१a यँ रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा ।
१ २ २ १००१c न किः स दभ्यते जनः ॥ १८५
१ २ २ १००२a गव्यो षु णो यथा पुराश्वयोत रथया ।
१ २ २ १००२c वरिवस्या महोनाम् ॥ १८६
१ २ २ १००३a इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् ।
१ २ २ १००३c एनामृतस्य पिप्युषीः ॥ १८७
१ २ २ १००४a अया धिया च गव्यया पुरुणामन्पुरुष्टुत ।
१ २ २ १००४c यत्सोमेसोम आभुवः ॥ १८८
१ २ २ १००५a पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
१ २ २ १००५c यज्ञं वष्टु धियावसुः ॥ १८९
१ २ २ १००६a क इमं नाहुषीष्वा इन्द्रँ सोमस्य तर्पयात् ।
१ २ २ १००६c स नो वसून्या भरात् ॥ १९०
१ २ २ १००७a आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् ।
१ २ २ १००७c एदं बर्हिः सदो मम ॥ १९१
१ २ २ १००८a महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः ।
१ २ २ १००८c दुराधर्षं वरुणस्य ॥ १९२
१ २ २ १००९a त्वावतः पुरूवसो वयमिन्द्र प्रणेतः ।
१ २ २ १००९c स्मसि स्थातर्हरीणाम् ॥ १९३

तृतीय प्रपाठकः । प्रथमोऽर्धः

१ ३ १ ०१०१a उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः ।
१ ३ १ ०१०१c अव ब्रह्मद्विषो जहि ॥ १९४
१ ३ १ ०१०२a गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे ।
१ ३ १ ०१०२c इन्द्र त्वादातमिद्यशः ॥ १९५
१ ३ १ ०१०३a सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् ।
१ ३ १ ०१०३c न देवो वृतः शूर इन्द्रः ॥ १९६
१ ३ १ ०१०४a आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
१ ३ १ ०१०४c न त्वामिन्द्राति रिच्यते ॥ १९७
१ ३ १ ०१०५a इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
१ ३ १ ०१०५c इन्द्रं वाणीरनूषत ॥ १९८
१ ३ १ ०१०६a इन्द्र इषे ददातु न ऋभुक्षणमृभुँ रयिम् ।
१ ३ १ ०१०६c वाजी ददातु वाजिनम् ॥ १९९
१ ३ १ ०१०७a इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् ।
१ ३ १ ०१०७c स हि स्थिरो विचर्षणिः ॥ २००
१ ३ १ ०१०८c इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः ।
१ ३ १ ०१०८a गावो वत्सं न धेनवः ॥ २०१
१ ३ १ ०१०९a इन्द्रा नु पूषणा वयँ सख्याय स्वस्तये ।
१ ३ १ ०१०९c हुवेम वाजसातये ॥ २०२
१ ३ १ ०११०a न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।
१ ३ १ ०११०c न क्येवं यथा त्वम् ॥ २०३

१ ३ १ ०२०१a तरणिं वो जनानां त्रदं वाजस्य गोमतः ।
१ ३ १ ०२०१c समानमु प्र शँसिषम् ॥ २०४
१ ३ १ ०२०२a असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत ।
१ ३ १ ०२०२c सजोषा वृषभं पतिम् ॥ २०५
१ ३ १ ०२०३a सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा ।
१ ३ १ ०२०३c मित्रास्पान्त्यद्रुहः ॥ २०६
१ ३ १ ०२०४a यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।
१ ३ १ ०२०४c वसु स्पार्हं तदा भर ॥ २०७
१ ३ १ ०२०५a श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् ।
१ ३ १ ०२०५c आशिषे राधसे महे ॥ २०८
१ ३ १ ०२०६a अरं त इन्द्र श्रवसे गमेम शूर त्वावतः ।
१ ३ १ ०२०६c अरँ शक्र परेमणि ॥ २०९
१ ३ १ ०२०७a धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् ।
१ ३ १ ०२०७c इन्द्र प्रातर्जुषस्व नः ॥ २१०
१ ३ १ ०२०८a अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः ।

१ ३ १ ०२०८c विश्वा यदजय स्पृधः ॥ २११
१ ३ १ ०२०९a इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः ।
१ ३ १ ०२०९c तेषां मत्स्व प्रभूवसो ॥ २१२
१ ३ १ ०२१०a तुभ्यँ सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो ।
१ ३ १ ०२१०c स्तोतृभ्य इन्द्र मृडय ॥ २१३

१ ३ १ ०३०१a आ व इन्द्र कृविं यथा वाजयन्तः शतक्रतुम् ।
१ ३ १ ०३०१c मँहिष्ठँ सिञ्च इन्दुभिः ॥ २१४
१ ३ १ ०३०२a अतश्चिदिन्द्र न उपा याहि शतवाजया ।
१ ३ १ ०३०२c इषा सहस्रवाजया ॥ २१५
१ ३ १ ०३०३a आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् ।
१ ३ १ ०३०३c क उग्राः के ह शृण्विरे ॥ २१६
१ ३ १ ०३०४a बृबदुक्थँ हवामहे सृप्रकरस्नमूतये ।
१ ३ १ ०३०४c साधः कृण्वन्तमवसे ॥ २१७
१ ३ १ ०३०५a ऋजुनीती नो वरुणो मित्रो नयति विद्वान् ।
१ ३ १ ०३०५c अर्यमा देवैः सजोषाः ॥ २१८
१ ३ १ ०३०६a दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत् ।
१ ३ १ ०३०६c वि भानुं विश्वथातनत् ॥ २१९
१ ३ १ ०३०७a आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
१ ३ १ ०३०७c मध्वा रजाँसि सुक्रतू ॥ २२०
१ ३ १ ०३०८a उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत ।
१ ३ १ ०३०८c वाश्रा अभिज्ञु यातवे ॥ २२१
१ ३ १ ०३०९a इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
१ ३ १ ०३०९c समूढमस्य पाँसुले ॥ २२२

१ ३ १ ०४०१a अतीहि मन्युषाविणँ सुषुवाँसमुपेरय ।
१ ३ १ ०४०१c अस्य रातौ सुतं पिब ॥ २२३
१ ३ १ ०४०२a कदु प्रचेतसे महे वचो देवाय शस्यते ।
१ ३ १ ०४०२c तदिध्यस्य वर्धनम् ॥ २२४
१ ३ १ ०४०३a उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
१ ३ १ ०४०३c न गायत्रं गीयमानम् ॥ २२५
१ ३ १ ०४०४a इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः ।
१ ३ १ ०४०४c हरिवान्त्सुतानाँ सखा ॥ २२६
१ ३ १ ०४०५a आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः ।
१ ३ १ ०४०५c महाँ इव युवजानिः ॥ २२७
१ ३ १ ०४०६a कदा वसो स्तोत्रँ हर्यत आ अव श्मशा रुधद्वाः ।
१ ३ १ ०४०६c दीर्घँ सुतम् वाताप्याय ॥ २२८
१ ३ १ ०४०७a ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँ रनु ।

१ ३ १ ०४०७c तवेदँ सख्यमस्तृतम् ॥ २२९
१ ३ १ ०४०८a वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः ।
१ ३ १ ०४०८c त्वं नो जिन्व सोमपाः ॥ २३०
१ ३ १ ०४०९a एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः ।
१ ३ १ ०४०९c सत्राजिदुग्र पौँस्यम् ॥ २३१
१ ३ १ ०४१०a एवा ह्यसि वीरयुरेवा शूर उत स्थिरः ।
१ ३ १ ०४१०c एवा ते राध्यं मनः ॥ २३२

१ ३ १ ०५०१a अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
१ ३ १ ०५०१c ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ २३३
१ ३ १ ०५०२a त्वामिद्धि हवामहे सातौ वाजस्य कार्वः ।
१ ३ १ ०५०२c त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ २३४
१ ३ १ ०५०३a अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
१ ३ १ ०५०३c यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ २३५
१ ३ १ ०५०४a तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
१ ३ १ ०५०४c अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ २३६
१ ३ १ ०५०५a तरोभिर्वो विदद्वसुमिन्द्रँ सबाध ऊतये ।
१ ३ १ ०५०५c बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ २३७
१ ३ १ ०५०६a तरणिरित्सिषासति वाजं पुरन्ध्या युजा ।
१ ३ १ ०५०६c आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ २३८
१ ३ १ ०५०७a पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
१ ३ १ ०५०७c आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः ॥ २३९
१ ३ १ ०५०८a त्वँ ह्येहि चेरवे विदा भगं वसुत्तये ।
१ ३ १ ०५०८c उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये ॥ २४०
१ ३ १ ०५०९a न हि वश्चरमं च न वसिष्ठः परिमँस्ते ।
१ ३ १ ०५०९c अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः ॥ २४१
१ ३ १ ०५१०a मा चिदन्यद्वि शँसत सखायो मा रिषण्यत ।
१ ३ १ ०५१०c इन्द्रमित्स्तोता वृषणँ सचा सुते मुहुरुक्था च शँसत ॥ २४२

तृतीय प्रपाठकः । द्वितीयोऽर्धः

१ ३ १ ०६०१a न किष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
१ ३ १ ०६०१c इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ २४३
१ ३ २ ०६०२a य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
१ ३ २ ०६०२c सन्धाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः ॥ २४४
१ ३ २ ०६०३a आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
१ ३ २ ०६०३c ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ २४५
१ ३ २ ०६०४a आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
१ ३ २ ०६०४c मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥ २४६

१ ३ २ ०६०५a त्वमङ्ग प्र शँसिषो देवः शविष्ठ मर्त्यम् ।
१ ३ २ ०६०५c न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ २४७
१ ३ २ ०६०६a त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
१ ३ २ ०६०६c त्वं वृत्राणि हँस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ २४८
१ ३ २ ०६०७a इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
१ ३ २ ०६०७c इन्द्रँ समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ २४९
१ ३ २ ०६०८a इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
१ ३ २ ०६०८c पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ २५०
१ ३ २ ०६०९a उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
१ ३ २ ०६०९c सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ २५१
१ ३ २ ०६१०a यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
१ ३ २ ०६१०c आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ २५२

१ ३ २ ०७०१a शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
१ ३ २ ०७०१c भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ २५३
१ ३ २ ०७०२a या इन्द्र भुज आभरः स्ववाँ असुरेभ्यः ।
१ ३ २ ०७०२c स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥ २५४
१ ३ २ ०७०३a प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।
१ ३ २ ०७०३c वरूथ्ये३ वरुणे छन्द्यं वचः स्तोत्रँ राजसु गायत ॥ २५५
१ ३ २ ०७०४a अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
१ ३ २ ०७०४c समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥ २५६
१ ३ २ ०७०५a प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
१ ३ २ ०७०५c वृत्रँ हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ २५७
१ ३ २ ०७०६a बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
१ ३ २ ०७०६c येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥ २५८
१ ३ २ ०७०७a इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
१ ३ २ ०७०७c शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ २५९
१ ३ २ ०७०८a मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
१ ३ २ ०७०८c त्वं न ऊती त्वमित्र आप्यम् मा न इन्द्र परा वृणक् ॥ २६०
१ ३ २ ०७०९a वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
१ ३ २ ०७०९c पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ २६१
१ ३ २ ०७१०a यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु ।
१ ३ २ ०७१०c यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौँस्या ॥ २६२

१ ३ २ ०८०१a सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता ।
१ ३ २ ०८०१c वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥ २६३
१ ३ २ ०८०२a यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
१ ३ २ ०८०२c अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥ २६४

१ ३ २ ०८०३a अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।
१ ३ २ ०८०३c इन्द्रं नाम श्रुत्यँ शाकिनं वचो यथा ॥ २६५
१ ३ २ ०८०४a इन्द्र त्रिधातु शरणं त्रिवरूथँ स्वस्तये ।
१ ३ २ ०८०४c छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥ २६६
१ ३ २ ०८०५a श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
१ ३ २ ०८०५c वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥ २६७
१ ३ २ ०८०६a न सीमदेव आप तदिषं दीर्घायो मर्त्यः ।
१ ३ २ ०८०६c एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते ॥ २६८
१ ३ २ ०८०७a आ नो विश्वासु हव्यमिन्द्रँ समत्सु भूषत ।
१ ३ २ ०८०७c उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥ २६९
१ ३ २ ०८०८a तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
१ ३ २ ०८०८c सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते ॥ २७०
१ ३ २ ०८०९a क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः ।
१ ३ २ ०८०९c अलर्षि युध्म खजकृत्पुरन्दर प्र गायत्रा अगासिषुः ॥ २७१
१ ३ २ ०८१०a वयमेनमिदा ह्योपीपेमेह वज्रिणम् ।
१ ३ २ ०८१०c तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ २७२

१ ३ २ ०९०१a यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
१ ३ २ ०९०१c विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ २७३
१ ३ २ ०९०२a यत इन्द्र भयामहे ततो नो अभयं कृधि ।
१ ३ २ ०९०२c मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ २७४
१ ३ २ ०९०३a वास्तोष्पते ध्रुवा स्थूणाँ सत्रँ सोम्यानाम् ।
१ ३ २ ०९०३c द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीनाँ सखा ॥ २७५
१ ३ २ ०९०४a बण्महाँ असि सूर्य बडादित्य महाँ असि ।
१ ३ २ ०९०४c महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥ २७६
१ ३ २ ०९०५a अश्वी रथी सुरूप इद्गोमाँ यदिन्द्र ते सखा ।
१ ३ २ ०९०५c श्वात्रभाजा वयसा सचते सदा चन्द्रैर्याति सभामुप ॥ २७७
१ ३ २ ०९०६a यद्द्याव इन्द्र ते शतँ शतं भूमीरुत स्युः ।
१ ३ २ ०९०६c न त्वा वज्रिन्त्सहस्रँ सूर्या अनु न जातमष्ट रोदसी ॥ २७८
१ ३ २ ०९०७a यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः ।
१ ३ २ ०९०७c सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ २७९
१ ३ २ ०९०८a कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति ।
१ ३ २ ०९०८c श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाजँ सिषासति ॥ २८०
१ ३ २ ०९०९a इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः ।
१ ३ २ ०९०९c हित्वा शिरो जिह्वया रारपच्चरत्त्रिँशत्पदा न्यक्रमीत् ॥ २८१
१ ३ २ ०९१०a इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।
१ ३ २ ०९१०c आ शं तम शं तमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥ २८२

१ ३ २ १००१a इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
१ ३ २ १००१c आशुं जेतारँ हेतारँ रथीतममतूर्तं तुग्रियावृधम् ॥ २८३
१ ३ २ १००२a मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
१ ३ २ १००२c आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ २८४
१ ३ २ १००३a सुनोत सोमपाव्ने सोममिन्द्राय वज्रिणे ।
१ ३ २ १००३c पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥ २८५
१ ३ २ १००४a यः सत्राहा विचर्षणिरिन्द्रं तँ हूमहे वयम् ।
१ ३ २ १००४c सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥ २८६
१ ३ २ १००५a शचीभिर्नः शचीवसू दिवानक्तं दिशस्यतम् ।
१ ३ २ १००५c मा वाँ रातिरुप दसत्कदा च नास्मद्रातिः कदा च न ॥ २८७
१ ३ २ १००६a यदा कदा च मीढुषे स्तोता जरेत मर्त्यः ।
१ ३ २ १००६c आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम् ॥ २८८
१ ३ २ १००७a पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे ।
१ ३ २ १००७c यः सम्मिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः ॥ २८९
१ ३ २ १००८a उभयँ शृणवच्च न इन्द्रो अर्वागिदं वचः ।
१ ३ २ १००८c सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥ २९०
१ ३ २ १००९a महे च न त्वाद्रिवः परा शुल्काय दीयसे ।
१ ३ २ १००९c न सहस्राय नायुताये वज्रिवो न शताय शतामघ ॥ २९१
१ ३ २ १०१०a वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः ।
१ ३ २ १०१०c माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥ २९२

चतुर्थ प्रपाठकः । प्रथमोऽर्धः

१ ४ १ ०१०१a इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।
१ ४ १ ०१०१c ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥ २९३
१ ४ १ ०१०२a इम इन्द्र मदाय ते सोमाश्चिकित्र उकिथनः ।
१ ४ १ ०१०२c मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः ॥ २९४
१ ४ १ ०१०३a आ त्वा३द्य सबर्दुघाँ हुवे गायत्रवेपसम् ।
१ ४ १ ०१०३c इन्द्रं धेनुँ सुदुघामन्यामिषमुरुधारामरङ्कृतम् ॥ २९५
१ ४ १ ०१०४a न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः ।
१ ४ १ ०१०४c यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते ॥ २९६
१ ४ १ ०१०५a क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
१ ४ १ ०१०५c अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः ॥ २९७
१ ४ १ ०१०६a यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।
१ ४ १ ०१०६c अस्माकमँशुं मघवन्पुरुस्पृहं वसव्ये अधि बर्हय ॥ २९८
१ ४ १ ०१०७a त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
१ ४ १ ०१०७c पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥ २९९
१ ४ १ ०१०८a कदा च न स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
१ ४ १ ०१०८c उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥ ३००

१ ४ १ ०१०९a युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।
१ ४ १ ०१०९c अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ ३०१
१ ४ १ ०११०a त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
१ ४ १ ०११०c स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥ ३०२

१ ४ १ ०२०१a प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः ।
१ ४ १ ०२०१c अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरि ॥ ३०३
१ ४ १ ०२०२a इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
१ ४ १ ०२०२c अयं वामह्वेऽवसे शचीवसू विशंविशँ हि गच्छथः ॥ ३०४
१ ४ १ ०२०३a कु ष्ठः को वामश्विना तपानो देवा मर्त्यः ।
१ ४ १ ०२०३c घ्नता वामश्मया क्षपमाणोँशुनेत्थमु आदुन्यथा ॥ ३०५
१ ४ १ ०२०४a अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
१ ४ १ ०२०४c तमश्विना पिबतं तिरो अह्न्यं धत्तँ रत्नानि दाशुषे ॥ ३०६
१ ४ १ ०२०५a आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या ।
१ ४ १ ०२०५c भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ ३०७
१ ४ १ ०२०६a अध्वर्यो द्रावया त्वँ सोममिन्द्रः पिपासति ।
१ ४ १ ०२०६c उपो नूनं युयुजे वृष्णा हरी आ च जगाम वृत्रहा ॥ ३०८
१ ४ १ ०२०७a अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।
१ ४ १ ०२०७c पुरूवसुर्हि मघवन्बभूविथ भरेभरे च हव्यः ॥ ३०९
१ ४ १ ०२०८a यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
१ ४ १ ०२०८c स्तोतारमिद्दधिषे रदावसो न पापत्वाय रँसिषम् ॥ ३१०
१ ४ १ ०२०९a त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
१ ४ १ ०२०९c अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ ३११
१ ४ १ ०२१०a प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।
१ ४ १ ०२१०c न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥ ३१२

१ ४ १ ०३०१a असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
१ ४ १ ०३०१c बोधामसि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु ॥ ३१३
१ ४ १ ०३०२a योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरूहूत प्र याहि ।
१ ४ १ ०३०२c असो यथा नोऽविता वृधश्चिद्ददो वसूनि ममदश्च सोमैः ॥ ३१४
१ ४ १ ०३०३a अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।
१ ४ १ ०३०३c महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान्हन् ॥ ३१५
१ ४ १ ०३०४a सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
१ ४ १ ०३०४c आ नो भर सुवितं यस्य कोना तना त्मना सह्यामा त्वोताः ॥ ३१६
१ ४ १ ०३०५a जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
१ ४ १ ०३०५c विद्मा हि त्वा गोपतिँ शूर गोनामस्मभ्यं चित्रं वृषणँ रयिन्दाः ॥ ३१७
१ ४ १ ०३०६a इन्द्रं नरो नेमधिता हवन्ति यत्पार्या युनजते धियस्ताः ।
१ ४ १ ०३०६c शूरो नृषाता श्रवसश्च काम आ गोमति व्रजे भजा त्वं नः ॥ ३१८

१ ४ १ ०३०७a वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
१ ४ १ ०३०७c अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्या३स्मान्निधयेव बद्धान् ॥ ३१९
१ ४ १ ०३०८a नाके सुपर्णमुप यत्पतन्तँ हृदा वेनन्तो अभ्यचक्षत त्वा ।
१ ४ १ ०३०८c हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ३२०
१ ४ १ ०३०९a ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
१ ४ १ ०३०९c स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥ ३२१
१ ४ १ ०३१०a अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
१ ४ १ ०३१०c विरप्शिने वज्रिणे शन्तमानि वचाँस्यास्मै स्थविराय तक्षुः ॥ ३२२

१ ४ १ ०४०१a अव द्रप्सो अँशुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः ।
१ ४ १ ०४०१c आवत्तमिन्द्रः शच्या धमन्तमप स्नीहितिं नृमणा अधद्राः ॥ ३२३
१ ४ १ ०४०२a वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।
१ ४ १ ०४०२c मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ ३२४
१ ४ १ ०४०३a विधुं दद्राणँ समने बहूनाँ युवानँ सन्तं पलितो जगार ।
१ ४ १ ०४०३c देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ३२५
१ ४ १ ०४०४a त्वँ ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
१ ४ १ ०४०४c गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ ३२६
१ ४ १ ०४०५a मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभँ स्थिरप्स्नुम् ।
१ ४ १ ०४०५c करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥ ३२७
१ ४ १ ०४०६a प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
१ ४ १ ०४०६a विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ३२८
१ ४ १ ०४०७a शुनँ हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
१ ४ १ ०४०७c शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि सञ्जितं धनानि ॥ ३२९
१ ४ १ ०४०८a उदु ब्रह्माण्यैरत श्रवस्येन्द्रँ समर्ये महया वसिष्ठ ।
१ ४ १ ०४०८c आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचाँसि ॥ ३३०
१ ४ १ ०४०९a चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
१ ४ १ ०४०९c पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ३३१

१ ४ १ ०५०१a त्यमू षु वाजिनं देवजूतँ सहोवानं तरुतारँ रथानाम् ।
१ ४ १ ०५०१c अरिष्टनेमिं पृतनाजमाशुँ स्वस्तये तार्क्ष्यमिहा हुवेम ॥ ३३२
१ ४ १ ०५०२a त्रातारमिन्द्रमवितारमिन्द्रँ हवेहवे सुहवँ शूरमिन्द्रम् ।
१ ४ १ ०५०२c हुवे नु शक्रं पुरुहूतमिन्द्रमिदँ हविर्मघवा वेत्विन्द्रः ॥ ३३३
१ ४ १ ०५०३a यजामह इन्द्रं वज्रदक्षिणँ हरीणाँ रथ्य३ं विव्रतानाम् ।
१ ४ १ ०५०३c प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ॥ ३३४
१ ४ १ ०५०४a सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृशभँ सुवज्रम् ।
१ ४ १ ०५०४c हन्ता यो वृत्रँ सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ३३५
१ ४ १ ०५०५a यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा ।
१ ४ १ ०५०५c क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ॥ ३३६

१ ४ १ ०५०६a यं वृत्रेषु क्षितय स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते ।
१ ४ १ ०५०६c यँ शूरसातौ यमपामुपज्मन्यं विप्रासो वाजयन्ते स इन्द्रः ॥ ३३७
१ ४ १ ०५०७a इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतँ सुवीराः ।
१ ४ १ ०५०७c वीतँ हव्यान्यध्वरेषु देवा वर्धेथां गीर्भीरिडया मदन्ता ॥ ३३८
१ ४ १ ०५०८a इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात् ।
१ ४ १ ०५०८c यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ३३९
१ ४ १ ०५०९a आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवां जगम्याः ।
१ ४ १ ०५०९c पितुर्नपातमा दधित वेधा अस्मिन्क्षये प्रतरां दीद्यानः ॥ ३४०
१ ४ १ ०५१०a को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
१ ४ १ ०५१०c आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ३४१

चतुर्थ प्रपाठकः । द्वितीयोऽर्धः

१ ४ २ ०६०१a गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
१ ४ २ ०६०१c ब्रह्माणस्त्वा शतक्रत उद्वँशमिव येमिरे ॥ ३४२
१ ४ २ ०६०२a इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
१ ४ २ ०६०२c रथीतमँ रथीनां वाजानाँ सत्पतिं पतिम् ॥ ३४३
१ ४ २ ०६०३a इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
१ ४ २ ०६०३c शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ३४४
१ ४ २ ०६०४a यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
१ ४ २ ०६०४c राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ३४५
१ ४ २ ०६०५a श्रुदी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
१ ४ २ ०६०५c सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ३४६
१ ४ २ ०६०६a असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
१ ४ २ ०६०६c आ त्वा पृणक्त्विन्द्रियँ रजः सूर्यो न रश्मिभिः ॥ ३४७
१ ४ २ ०६०७a एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
१ ४ २ ०६०७c दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ ३४८
१ ४ २ ०६०८a आ त्वा गिरो रथीरिवास्थुः सुतेषु गिर्वणः ।
१ ४ २ ०६०८c अभि त्वा समनूषत गावो वत्सं न धेनवः ॥ ३४९
१ ४ २ ०६०९a एतो न्विन्द्रँ स्तवाम शुद्धँ शुद्धेन साम्ना ।
१ ४ २ ०६०९c शुद्धैरुक्थैर्वावृध्वाँसँ शुद्धैराशीर्वान्ममत्तु ॥ ३५०
१ ४ २ ०६१०a यो रयिं वो रयिन्तमो यो द्युम्नैर्द्युम्नवत्तमः ।
१ ४ २ ०६१०c सोमः सुतः स इन्द्र तेऽस्ति स्वधापते मदः ॥ ३५१

१ ४ २ ०७०१a प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
१ ४ २ ०७०१c अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ ३५२
१ ४ २ ०७०२a आ नो वयोवयःशयं महान्तं गह्वरेष्ठां महान्तं पूर्विनेष्ठाम् ।
१ ४ २ ०७०२c उग्रं वचो अपावधीः ॥ ३५३
१ ४ २ ०७०३a आ त्वा रथं यथोतये सुम्नाय वर्तयामसि ।

१ ४ २ ०७०३c तुविकूर्मिमृतीषहमिन्द्रँ शविष्ठ सत्पतिम् ॥ ३५४
१ ४ २ ०७०४a स पूर्व्यो महोनां वेनः क्रतुभिरानजे ।
१ ४ २ ०७०४c यस्य द्वारा मनुः पिता देवेषु धिय आनजे ॥ ३५५
१ ४ २ ०७०५a यदी वहन्त्याशवो भ्राजमाना रथेष्वा ।
१ ४ २ ०७०५c पिबन्तो मदिरं मधु तत्र श्रवाँसि कृण्वते ॥ ३५६
१ ४ २ ०७०६a त्यमु वो अप्रहणं गृणीषे शवसस्पतिम् ।
१ ४ २ ०७०६c इन्द्रं विश्वासाहं नरँ शचिष्ठं विश्ववेदसम् ॥ ३५७
१ ४ २ ०७०७a दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
१ ४ २ ०७०७c सुरभि नो मुखा करत्प्र न आयूँषि तारिषत् ॥ ३५८
१ ४ २ ०७०८a पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
१ ४ २ ०७०८c इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः ॥ ३५९

१ ४ २ ०८०१a प्रप्र वस्त्रिष्टुभमिषं वन्दद्वीरायेन्दवे ।
१ ४ २ ०८०१c धिया वो मेधसातये पुरन्ध्या विवासति ॥ ३६०
१ ४ २ ०८०२a कश्यपस्य स्वर्विदो यावाहुः सयुजाविति ।
१ ४ २ ०८०२c ययोर्विश्वमपि व्रतं यज्ञं धीरा निचाय्य ॥ ३६१
१ ४ २ ०८०३a अर्चत प्रार्चता नरः प्रियमेधासो अर्चत ।
१ ४ २ ०८०३c अर्चन्तु पुत्रका उत पुरमिद्धृष्ण्वर्चत ॥ ३६२
१ ४ २ ०८०४a उक्थमिन्द्राय शँस्यं वर्धनं पुरुनिःषिधे ।
१ ४ २ ०८०४c शक्रो यथा सुतेषु नो रारणत्सख्येषु च ॥ ३६३
१ ४ २ ०८०५a विश्वानरस्य वस्पतिमनानतस्य शवसः ।
१ ४ २ ०८०५c एवैश्च चर्षणीनामूती हुवे रथानाम् ॥ ३६४
१ ४ २ ०८०६a स घा यस्ते दिवो नरो धिया मर्तस्य शमतः ।
१ ४ २ ०८०६c ऊती स बृहतो दिवो द्विषो अँहो न तरति ॥ ३६५
१ ४ २ ०८०७a विभोष्ट इन्द्र राधसो विभ्वी रातिः शतक्रतो ।
१ ४ २ ०८०७c अथा नो विश्वचर्षणे द्युम्नँ सुदत्र मँहय ॥ ३६६
१ ४ २ ०८०८a वयश्चित्ते पतत्रिणो द्विपाच्चतुष्पादर्जुनि ।
१ ४ २ ०८०८c उषः प्रारन्नृतूँरनु दिवो अन्तेभ्यस्परि ॥ ३६७
१ ४ २ ०८०९a अमी ये देवा स्थन मध्य आ रोचने दिवः ।
१ ४ २ ०८०९c कद्व ऋतं कदमृतं का प्रत्ना व आहुतिः ॥ ३६८
१ ४ २ ०८१०a ऋचँ साम यजामहे याभ्यां कर्माणि कृण्वते ।
१ ४ २ ०८१०c वि ते सदसि राजतो यज्ञं देवेषु वक्षतः ॥ ३६९

१ ४ २ ०९०१a विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
१ ४ २ ०९०१c क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ ३७०
१ ४ २ ०९०२a श्रत्ते दधामि प्रथमाय मन्यवेऽहन्यद्दस्युं नर्यं विवेरपः ।
१ ४ २ ०९०२c उभे यत्वा रोदसी धावतामनु भ्यसात्ते शुष्मात्पृथिवी चिदद्रिवः ॥ ३७१
१ ४ २ ०९०३a समेत विश्वा ओजसा पतिं दिवो य एक इद्भूरतिथिर्जनानाम्

१ ४ २ ०९०३c स पूर्व्यो नूतनमाजिगीषं तं वर्त्तनीरनु वावृत एक इत् ॥ ३७२
१ ४ २ ०९०४a इमे त इन्द्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो ।
१ ४ २ ०९०४c न हि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति तद्धर्य नो वचः ॥ ३७३
१ ४ २ ०९०५a चर्षणीधृतं मघवानमुक्थ्या३मिन्द्रं गिरो बृहतीरभ्यनूषत ।
१ ४ २ ०९०५c वावृधानं पुरुहूतँ सुवृक्तिभिरमर्त्यं जरमाणं दिवेदिवे ॥ ३७४
१ ४ २ ०९०६a अच्छा व इन्द्रं मतयः स्वर्युवः सध्रीचीर्विश्वा उशतीरनूषत ।
१ ४ २ ०९०६c परि ष्वजन्त जनयो यथा पतिं मर्यं न शुन्ध्युं मघवानमूतये ॥ ३७५
१ ४ २ ०९०७a अभि त्यं मेषं पुरुहूतमृग्मियमिन्द्रं गीर्भिर्मदता वस्वो अर्णवम् ।
१ ४ २ ०९०७c यस्य द्यावो न विचरन्ति मानुषं भुजे मँहिष्ठमभि विप्रमर्चत ॥ ३७६
१ ४ २ ०९०८a त्यँ सु मेषं महया स्वर्विदँ शतं यस्य सुभुवः साकमीरते ।
१ ४ २ ०९०८c अत्यं न वाजँ हवनस्यदँ रथमेन्द्रं ववृत्यामवसे सुवृक्तिभिः ॥ ३७७
१ ४ २ ०९०९a घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा ।
१ ४ २ ०९०९c द्यावापृथिवी वरुणस्य धर्मणा विष्कभिते अजरे भूरिरेतसा ॥ ३७८
१ ४ २ ०९१०a उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
१ ४ २ ०९१०c महान्तं त्वा महीनाँ सम्राजं चर्षणीनाम् ।
१ ४ २ ०९१०e देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ ३७९
१ ४ २ ०९११a प्र मन्दिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
१ ४ २ ०९११c अवस्यवो वृषणं वज्रदक्षिणं मरुत्वन्तँ सख्याय हुवेमहि ॥ ३८०

१ ४ २ १००१a इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् ।
१ ४ २ १००१c विदे वृधस्य दक्षस्य महाँ हि षः ॥ ३८१
१ ४ २ १००२a तमु अभि प्र गायत पुरुहूतं पुरुष्टुतम् ।
१ ४ २ १००२c इन्द्रं गीर्भिस्तविषमा विवासत ॥ ३८२
१ ४ २ १००३a तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
१ ४ २ १००३c उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ ३८३
१ ४ २ १००४a यत्सोममिन्द्र विष्णवि यद्वा घ त्रित आप्त्ये ।
१ ४ २ १००४c यद्वा मरुत्सु मन्दसे समिन्दुभिः ॥ ३८४
१ ४ २ १००५a एदु मधोर्मदिन्तरँ सिञ्चाध्वर्यो अन्धसः ।
१ ४ २ १००५c एवा हि वीरस्तवते सदावृधः ॥ ३८५
१ ४ २ १००६a एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
१ ४ २ १००६c प्र राधाँसि चोदयते महित्वना ॥ ३८६
१ ४ २ १००७a एतो न्विन्द्रँ स्तवाम सखायः स्तोम्यं नरम् ।
१ ४ २ १००७c कृष्टीर्यो विश्वा अभ्यस्त्येक इत् ॥ ३८७
१ ४ २ १००८a इन्द्राय साम गायत विप्राय बृहते बृहत् ।
१ ४ २ १००८c ब्रह्मकृते विपश्चिते पनस्यवे ॥ ३८८
१ ४ २ १००९a य एक इद्विदयते वसु मर्ताय दाशुषे ।
१ ४ २ १००९c ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ ३८९
१ ४ २ १०१०a सखाय आ शिषामहे ब्रह्मेन्द्राय वज्रिणे ।

१ ४ २ १०१०c स्तुष ऊ षु वो नृतमाय धृष्णवे ॥ ३९०

पञ्चम प्रपाठकः । प्रथमोऽर्धः

१ ५ १ ०१०१a गृणे तदिन्द्र ते शव उपमां देवतातये ।
१ ५ १ ०१०१c यद्धँसि वृत्रमोजसा शचीपते ॥ ३९१
१ ५ १ ०१०२a यस्य त्यच्छम्बरं मदे दिवोदासाय रन्धयन् ।
१ ५ १ ०१०२c अयँ स सोम इन्द्र ते सुतः पिब ॥ ३९२
१ ५ १ ०१०३a एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
१ ५ १ ०१०३c गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ ३९३
१ ५ १ ०१०४a य इन्द्र सोमपातमो मदः शविष्ठ चेतति ।
१ ५ १ ०१०४c येना हँसि न्या३त्रिणं तमीमहे ॥ ३९४
१ ५ १ ०१०५a तुचे तुनाय तत्सु नो द्राधीय आयुर्जीवसे ।
१ ५ १ ०१०५c आदित्यासः समहसः कृणोतन ॥ ३९५
१ ५ १ ०१०६a वेत्था हि निर्ऋतीनां वज्रहस्त परिवृजम् ।
१ ५ १ ०१०६c अहरहः शुन्ध्युः परिपदामिव ॥ ३९६
१ ५ १ ०१०७a अपामीवामप स्रिधमप सेधत दुर्मतिम् ।
१ ५ १ ०१०७c आदित्यासो युयोतना नो अँहसः ॥ ३९७
१ ५ १ ०१०८a पिबा सोममिन्द्र मन्दतु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
१ ५ १ ०१०८c सोतुर्बाहुभ्याँ सुयतो नार्वा ॥ ३९८

१ ५ १ ०२०१a अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
१ ५ १ ०२०१c युधेदापित्वमिच्छसे ॥ ३९९
१ ५ १ ०२०२a यो न इदमिदं पुरा प्र वस्य आनिनाय तमु व स्तुषे ।
१ ५ १ ०२०२c सखाय इन्द्रमूतये ॥ ४००
१ ५ १ ०२०३a आ गन्ता मा रिषण्यत प्रस्थावानो माप स्थात समन्यवः ।
१ ५ १ ०२०३c दृढा चिद्यमयिष्णवः ॥ ४०१
१ ५ १ ०२०४a आ याह्ययमिन्दवेऽश्वपते गोपत उर्वरापते ।
१ ५ १ ०२०४c सोमँ सोमपते पिब ॥ ४०२
१ ५ १ ०२०५a त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि ।
१ ५ १ ०२०५c सँस्थे जनस्य गोमतः ॥ ४०३
१ ५ १ ०२०६a गावश्चिद्घा समन्यवः सजात्येन मरुतः सबन्धवः ।
१ ५ १ ०२०६c रिहते ककुभो मिथः ॥ ४०४
१ ५ १ ०२०७a त्वं न इन्द्रा भर ओजो नृम्णँ शतक्रतो विचर्षणे ।
१ ५ १ ०२०७c आ वीरं पृतनासहम् ॥ ४०५
१ ५ १ ०२०८a अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
१ ५ १ ०२०८c उदेव ग्मन्त उदभिः ॥ ४०६
१ ५ १ ०२०९a सीदन्तस्ते वयो यथा गोश्रीते मधौ मदिरे विवक्षणे ।
१ ५ १ ०२०९c अभि त्वामिन्द्र नोनुमः ॥ ४०७

१ ५ १ ०२१०a वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।
१ ५ १ ०२१०c वज्रिञ्चित्रँ हवामहे ॥ ४०८

१ ५ १ ०३०१a स्वादोरित्था विषूवतो मधोः पिबन्ति गौर्यः ।
१ ५ १ ०३०१c या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभथा वस्वीरनु स्वराज्यम् ॥ ४०९
१ ५ १ ०३०२a इत्था हि सोम इन्मदो ब्रह्म चकार वर्धनम् ।
१ ५ १ ०३०२c शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यम् ॥ ४१०
१ ५ १ ०३०३a इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
१ ५ १ ०३०३c तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ ४११
१ ५ १ ०३०४a इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
१ ५ १ ०३०४c यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीरर्चन्ननु स्वराज्यम् ॥ ४१२
१ ५ १ ०३०५a प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यँसते ।
१ ५ १ ०३०५c इन्द्र नृम्णँ हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ४१३
१ ५ १ ०३०६a यदुदीरत आजयो धृष्णवे धीयते धनम् ।
१ ५ १ ०३०६c युङ्क्ष्वा मदच्युता हरी कँ हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ४१४
१ ५ १ ०३०७a अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
१ ५ १ ०३०७c अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ४१५
१ ५ १ ०३०८a उपो षु शृणुही गिरो मघवन्मातथा इव ।
१ ५ १ ०३०८c कदा नः सूनृतावतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ॥ ४१६
१ ५ १ ०३०९a चन्द्रमा अप्स्वा३न्तरा सुपर्णो धावते दिवि ।
१ ५ १ ०३०९c न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ ४१७
१ ५ १ ०३१०a प्रति प्रियतमँ रथं वृषणं वसुवाहनम् ।
१ ५ १ ०३१०c स्तोता वामश्विनावृशि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतँ हवम् ॥ ४१८

१ ५ १ ०४०१a आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
१ ५ १ ०४०१c युद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषँ स्तोतृभ्य आ भर ॥ ४१९
१ ५ १ ०४०२a आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
१ ५ १ ०४०२c शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥ ४२०
१ ५ १ ०४०३a महे नो अद्य बोधयोषो राये दिवित्मती ।
१ ५ १ ०४०३c यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ४२१
१ ५ १ ०४०४a भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
१ ५ १ ०४०४c अथा ते सख्ये अन्धसो वि वो मदे रणा गावो न यवसे विवक्षसे ॥ ४२२
१ ५ १ ०४०५a क्रत्वा महाँ अनुष्वधं भीम आ वावृते शवः ।
१ ५ १ ०४०५c श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवां दधे हस्तयोर्वज्रमायसम् ॥ ४२३
१ ५ १ ०४०६a स घा तं वृषणँ रथमधि तिष्ठाति गोविदम् ।
१ ५ १ ०४०६c यः पात्रँ हारियोजनं पूर्णमिन्द्रा चिकेतति योजा न्विन्द्र ते हरी ॥ ४२४
१ ५ १ ०४०७a अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
१ ५ १ ०४०७c अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषँ स्तोतृभ्य आ भर ॥ ४२५

१ ५ १ ०४०८a  न तमँहो न दुरितं देवासो अष्ट मर्त्यम् ।
१ ५ १ ०४०८c  सजोषसो यमर्यमा मित्रो नयति वरुणो अति द्विषः ॥ ४२६

१ ५ १ ०५०१a  परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ ४२७
१ ५ १ ०५०२a  पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
१ ५ १ ०५०२c  द्विषस्तरध्या ऋणया न ईरसे ॥ ४२८
१ ५ १ ०५०३a  पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ ४२९
१ ५ १ ०५०४a  पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ ४३०
१ ५ १ ०५०५a  इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ ४३१
१ ५ १ ०५०६a  अनु हि त्वा सुतँ सोम मदामसि महे समर्यराज्ये ।
१ ५ १ ०५०६c  वाजाँ अभि पवमान प्र गाहसे ॥ ४३२
१ ५ १ ०५०७a  क ईं व्यक्ता नरः सनीडा रुद्रस्य मर्या अथ स्वश्वाः ॥ ४३३
१ ५ १ ०५०८a  अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रँ हृदिस्पृशम् ।
१ ५ १ ०५०८c  ऋध्यामा त ओहैः ॥ ४३४
१ ५ १ ०५०९a  आविर्मर्या आ वाजं वाजिनो अग्मं देवस्य सवितुः सवम् ।
१ ५ १ ०५०९c  स्वर्गाँ अर्वन्तो जयत ॥ ४३५
१ ५ १ ०५१०a  पवस्व सोम द्युम्नी सुधारो महाँ अवीनामनुपूर्व्यः ॥ ४३६

पञ्चम प्रपाठकः । द्वितीयोऽर्धः

१ ५ २ ०६०१a  विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे ॥ ४३७
१ ५ २ ०६०२a  एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ ४३८
१ ५ २ ०६०३a  ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४३९
१ ५ २ ०६०४a  अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ४४०
१ ५ २ ०६०५a  शं पदं मघँ रयीषिणो न काममव्रतो हिनोति न स्पृशद्रयिम् ॥ ४४१
१ ५ २ ०६०६a  सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ॥ ४४२
१ ५ २ ०६०७a  आ याहि वनसा सह गावः सचन्त वर्त्तनिं यदूधभिः ॥ ४४३
१ ५ २ ०६०८a  उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥ ४४४
१ ५ २ ०६०९a  अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥ ४४५
१ ५ २ ०६१०a  प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ॥ ४४६

१ ५ २ ०७०१a  अचेत्यग्निश्चिकितिर्हव्यवाड्ग सुमद्रथः ॥ ४४७
१ ५ २ ०७०२a  अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ ४४८
१ ५ २ ०७०३a  भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥ ४४९
१ ५ २ ०७०४a  विश्वस्य प्र स्तोभ पुरो वा सन्यदि वेह नूनम् ॥ ४५०
१ ५ २ ०७०५a  उषा अप स्वसुष्टमः सं वर्त्तयति वर्त्तनिँ सुजातता ॥ ४५१
१ ५ २ ०७०६a  इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ ४५२
१ ५ २ ०७०७a  वि स्रुतयो यथा पथ इन्द्र त्वद्यन्तु रातयः ॥ ४५३
१ ५ २ ०७०८a  अया वाजं देवहितँ सनेम मदेम शतहिमाः सुवीराः ॥ ४५४

१ ५ २ ०७०९a ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ॥ ४५५
१ ५ २ ०७१०a इन्द्रो विश्वस्य राजति ॥ ४५६

१ ५ २ ०८०१a त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोमममपिबद्विष्णुना सुतं यथावश
१ ५ २ ०८०१c स ईं ममाद महि कर्म कर्त्तवे महामुरुँ सैनँ सश्चद्देवो देवँ सत्य इन्दुः सत्य
१ ५ २ ०८०२a अयँ सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्म ।
१ ५ २ ०८०२c ब्रध्नः समीचीरुषसः समैरयदरेपसः सोचेतसः स्वसरे मन्युमन्तश्चिता गोः ॥
१ ५ २ ०८०३a एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्ता राजेव सत्पति
१ ५ २ ०८०३c हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न पितरं वाजसातये मँहिष्ठं वाजस
१ ५ २ ०८०४a तमिन्द्रं जोहवीमि मघवानमुग्रँ सत्रा दधानमप्रतिष्कुतँ श्रवाँसि भूरिः ।
१ ५ २ ०८०४c मँहिष्ठो गीर्भिरा च यज्ञियो ववर्त्त राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४
१ ५ २ ०८०५a अस्तु श्रौष्टुरो अग्निं धिया दध आ नु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृ
१ ५ २ ०८०५c यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे ।
१ ५ २ ०८०५e अध प्र नूनमुप यन्ति धीतयो देवाँअच्छा न धीतयः ॥ ४६१
१ ५ २ ०८०६a प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
१ ५ २ ०८०६c प्र शर्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ ४६२
१ ५ २ ०८०७a अया रुचा हरिण्या पुनानो विश्वा द्वेषाँसि तरति सयुग्वभिः सूरो न सयुग्
१ ५ २ ०८०७c धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
१ ५ २ ०८०७e विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ ४६३
१ ५ २ ०८०८a अभि त्यं देवँ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवँ रत्नधामभि प्रियं म
१ ५ २ ०८०८c ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा
१ ५ २ ०८०९a अग्निँ होतारं मन्ये दास्वन्तं वसोः सूनुँ सहसो जातवेदसं विप्रं न जातवेद
१ ५ २ ०८०९c य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
१ ५ २ ०८०९c घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ ४६५
१ ५ २ ०८१०a तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
१ ५ २ ०८१०c यो देवस्य शवसा प्रारिणा असु रिणन्नपः ।
१ ५ २ ०८१०e भुवो विश्वमभ्यदेवमोजसा विदेदूर्जँ शतक्रतुर्विदेदिषम् ॥ ४६६

॥ इत्यैन्द्रं पर्व काण्डम् ॥

पावमान काण्डम्

१ ५ २ ०९०१a उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
१ ५ २ ०९०१c उग्रँ शर्म महि श्रवः ॥ ४६७
१ ५ २ ०९०२a स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
१ ५ २ ०९०२c इन्द्राय पातवे सुतः ॥ ४६८
१ ५ २ ०९०३a वृषा पवस्व धारया मरुत्वते च मत्सरः ।
१ ५ २ ०९०३c विश्वा दधान ओजसा ॥ ४६९
१ ५ २ ०९०४a यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।

१ ५ २ ०९०४c देवावीरघशँसहा ॥ ४७०
१ ५ २ ०९०५a तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
१ ५ २ ०९०५c हरिरेति कनिक्रदत् ॥ ४७१
१ ५ २ ०९०६a इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
१ ५ २ ०९०६c अर्कस्य योनिमासदम् ॥ ४७२
१ ५ २ ०९०७a असाव्यँशुर्मदायाप्सु दक्षो गिरिष्ठाः ।
१ ५ २ ०९०७c श्येनो न योनिमासदत् ॥ ४७३
१ ५ २ ०९०८a पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।
१ ५ २ ०९०८c मरुद्भ्यो वायवे मदः ॥ ४७४
१ ५ २ ०९०९a परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् ।
१ ५ २ ०९०९c मदेषु सर्वधा असि ॥ ४७५
१ ५ २ ०९१०a परि प्रिया दिवः कविर्वयाँसि नप्त्योर्हितः ।
१ ५ २ ०९१०c स्वानैर्याति कविक्रतुः ॥ ४७६

१ ५ २ १००१a प्र सोमासो मदच्युतः श्रवसे नो मघोनः ।
१ ५ २ १००१c सुता विदथे अक्रमुः ॥ ४७७
१ ५ २ १००२a प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
१ ५ २ १००२c वनानि महिषा इव ॥ ४७८
१ ५ २ १००३a पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने ।
१ ५ २ १००३c विश्वा अप द्विषो जहि ॥ ४७९
१ ५ २ १००४a वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।
१ ५ २ १००४c पवमान स्वर्दृशम् ॥ ४८०
१ ५ २ १००५a इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः ।
१ ५ २ १००५c सृजदश्वँ रथीरिव ॥ ४८१
१ ५ २ १००६a असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।
१ ५ २ १००६c शुक्रासो वीरयाशवः ॥ ४८२
१ ५ २ १००७a पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।
१ ५ २ १००७c वायुमा रोह धर्मणा ॥ ४८३
१ ५ २ १००८a पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
१ ५ २ १००८c ज्योतिर्वैश्वानरं बृहत् ॥ ४८४
१ ५ २ १००९a परि स्वानास इन्दवो मदाय बर्हणा गिरा ।
१ ५ २ १००९c मधो अर्षन्ति धारया ॥ ४८५
१ ५ २ १०१०a परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः ।
१ ५ २ १०१०c कारुं बिभ्रत्पुरुस्पृहम् ॥ ४८६

षष्ठ प्रपाठकः । प्रथमोऽर्धः

१ ६ १ ०१०१a उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
१ ६ १ ०१०१c इन्दुं देवा अयासिषुः ॥ ४८७

१ ६ १ ०१०२a पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
१ ६ १ ०१०२c शुम्भन्ति विप्रं धीतिभिः ॥ ४८८
१ ६ १ ०१०३a आविशन्कलशँ सुतो विश्वा अर्षन्नभि श्रियः ।
१ ६ १ ०१०३c इन्दुरिन्द्राय धीयते ॥ ४८९
१ ६ १ ०१०४a असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः ।
१ ६ १ ०१०४c कार्ष्मन्वाजी न्यक्रमीत् ॥ ४९०
१ ६ १ ०१०५a प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः ।
१ ६ १ ०१०५c घ्नन्तः कृष्णामप त्वचम् ॥ ४९१
१ ६ १ ०१०६a अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः ।
१ ६ १ ०१०६c नुदस्वादेवयुं जनम् ॥ ४९२
१ ६ १ ०१०७a अया पवस्व धारया यया सूर्यमरोचयः ।
१ ६ १ ०१०७c हिन्वानो मानुषीरपः ॥ ४९३
१ ६ १ ०१०८a स पवस्व य आविथेन्द्रं वृत्राय हन्तवे ।
१ ६ १ ०१०८c वव्रिवाँसं महीरपः ॥ ४९४
१ ६ १ ०१०९a अया वीती परि स्रव यस्त इन्दो मदेष्वा ।
१ ६ १ ०१०९c अवाहन्नवतीर्नव ॥ ४९५
१ ६ १ ०११०a परि द्युक्षँ सनद्रयिं भरद्वाजं नो अन्धसा ।
१ ६ १ ०११०c स्वानो अर्ष पवित्र आ ॥ ४९६

१ ६ १ ०२०१a अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
१ ६ १ ०२०१c सँ सूर्येण दिद्युते ॥ ४९७
१ ६ १ ०२०२a आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।
१ ६ १ ०२०२c पान्तमा पुरुस्पृहम् ॥ ४९८
१ ६ १ ०२०३a अध्वर्यो अद्रिभिः सुतँ सोमं पवित्र आ नय ।
१ ६ १ ०२०३c पुनीहीन्द्राय पातवे ॥ ४९९
१ ६ १ ०२०४a तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
१ ६ १ ०२०४c तरत्स मन्दी धावति ॥ ५००
१ ६ १ ०२०५a आ पवस्व सहस्रिणँ रयिँ सोम सुवीर्यम् ।
१ ६ १ ०२०५c अस्मे श्रवाँसि धारय ॥ ५०१
१ ६ १ ०२०६a अनु प्रत्नास आयवः पदं नवीयो अक्रमुः ।
१ ६ १ ०२०६c रुचे जनन्त सूर्यम् ॥ ५०२
१ ६ १ ०२०७a अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् ।
१ ६ १ ०२०७c सीदन्योनौ योनेष्वा ॥ ५०३
१ ६ १ ०२०८a वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः ।
१ ६ १ ०२०८c वृषा धर्माणि दध्रिषे ॥ ५०४
१ ६ १ ०२०९a इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
१ ६ १ ०२०९c इन्दो रुचाभि गा इहि ॥ ५०५
१ ६ १ ०२१०a मन्द्रया सोम धारया वृषा पवस्व देवयुः ।

१ ६ १ ०२१०c अव्यो वारेभिरस्मयुः ॥ ५०६
१ ६ १ ०२११a अया सोम सुकृत्यपा महान्त्सन्नभ्यवर्धथाः ।
१ ६ १ ०२११c हिन्दान इद्वृषायसे ॥ ५०७
१ ६ १ ०२१२a अयं विचर्षणिर्हितः पवमानः स चेतति ।
१ ६ १ ०२१२c हिन्वान आप्यं बृहत् ॥ ५०८
१ ६ १ ०२१३a प्र ण इन्दो महे तु न ऊर्मिं न बिभ्रदर्षसि ।
१ ६ १ ०२१३c अभि देवाँ अयास्यः ॥ ५०९
१ ६ १ ०२१४a अपघ्नन्पवते मृधोऽप सोमो अराव्णः ।
१ ६ १ ०२१४c गच्छन्निन्द्रस्य निष्कृतम् ॥ ५१०

१ ६ १ ०३०१a पुनानः सोम धारयापो वसानो अर्षसि ।
१ ६ १ ०३०१c आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ ५११
१ ६ १ ०३०२a परीतो षिञ्चता सुतँ सोमो य उत्तमँ हविः ।
१ ६ १ ०३०२c दधन्वाँ यो नर्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः ॥ ५१२
१ ६ १ ०३०३a आ सोम स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
१ ६ १ ०३०३c जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ ५१३
१ ६ १ ०३०४a प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
१ ६ १ ०३०४c अँशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ ५१४
१ ६ १ ०३०५a सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
१ ६ १ ०३०५c अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ५१५
१ ६ १ ०३०६a तवाहँ सोम रारण सख्य इन्दो दिवेदिवे ।
१ ६ १ ०३०६c पुरूणि बभ्रो नि चरन्ति मामव परिधीँरति ताँ इहि ॥ ५१६
१ ६ १ ०३०७a मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
१ ६ १ ०३०७c रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ५१७
१ ६ १ ०३०८a अभि सोमास आयवः पवन्ते मद्यं मदम् ।
१ ६ १ ०३०८c समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥ ५१८
१ ६ १ ०३०९a पुनानः सोम जागृविरव्या वारैः परि प्रियः ।
१ ६ १ ०३०९c त्वं विप्रो अभवोऽङ्गिरस्तम मध्वा यज्ञं मिमिक्ष णः ॥ ५१९
१ ६ १ ०३१०a इन्द्राय पवते मदः सोमो मरुत्वते सुतः ।
१ ६ १ ०३१०c सहस्रधारो अत्यव्यमर्षति तमी मृजन्त्यायवः ॥ ५२०
१ ६ १ ०३११a पवस्व वाजसातमोऽभि विश्वानि वार्या ।
१ ६ १ ०३११c त्वँ समुद्रः प्रथमे विधर्मं देवेभ्यं सोम मत्सरः ॥ ५२१
१ ६ १ ०३१२a पवमाना असृक्षत पवित्रमति धारया ।
१ ६ १ ०३१२c मरुत्वन्तो मत्सरा इन्द्रिया हया मेधामभि प्रयाँसि च ॥ ५२२

१ ६ १ ०४०१a प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
१ ६ १ ०४०१c अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ ५२३
१ ६ १ ०४०२a प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।

१ ६ १ ०४०२c महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ ५२४
१ ६ १ ०४०३a तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
१ ६ १ ०४०३c गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ५२५
१ ६ १ ०४०४a अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् ।
१ ६ १ ०४०४c सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमन्ति होता ॥ ५२६
१ ६ १ ०४०५a सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
१ ६ १ ०४०५c जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ५२७
१ ६ १ ०४०६a अभि त्रिपृष्ठं वृषणं वयोधामाङ्गोषिणमवावशन्त वाणीः ।
१ ६ १ ०४०६c वना वसानो वरुणो न सिन्धूर्वि रत्नधा दयते वार्याणि ॥ ५२८
१ ६ १ ०४०७a अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य गोपाः ।
१ ६ १ ०४०७c वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ ५२९
१ ६ १ ०४०८a कनिक्रन्ति हरिरा सृज्यमानः सीदन्वनस्य जठरे पुनानः ।
१ ६ १ ०४०८c नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥ ५३०
१ ६ १ ०४०९a एष स्य ते मधुमाँ इन्द्र सोमो वृषा वृष्णः परि पवित्रे अक्षाः ।
१ ६ १ ०४०९c सहस्रदाः शतदा भूरिदावा शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ५३१
१ ६ १ ०४१०a पवस्व सोम मधुमाँ ऋतावापो वसानो अधि सानो अव्ये ।
१ ६ १ ०४१०c अव द्रोणानि घृतवन्ति रोह मदिन्तमो मत्सर इन्द्रपानः ॥ ५३२

१ ६ १ ०५०१a प्र सेनानीः शूरो अग्रे रथानां गव्यन्नेति हर्षते अस्य सेना ।
१ ६ १ ०५०१c भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य आ सोमो वस्त्रा रभसानि दत्ते ॥ ५३३
१ ६ १ ०५०२a प्र ते धारा मधुमतीरसृग्रन्वारं यत्पूतो अत्येष्यव्यम् ।
१ ६ १ ०५०२c पवमान पवसे धाम गोनां जनयन्त्सूर्यमपिन्वो अर्कैः ॥ ५३४
१ ६ १ ०५०३a प्र गायताभ्यर्चाम देवान्त्सोमँ हिनोत महते धनाय ।
१ ६ १ ०५०३c स्वादुः पवतामति वारमव्यमा सीदतु कलशं देव इन्दुः ॥ ५३५
१ ६ १ ०५०४a प्र हिन्वानो जनिता रोदस्यो रथो न वाजँ सनिषन्नयासीत् ।
१ ६ १ ०५०४c इन्द्रं गच्छन्नायुधा सँशिशानो विश्वा वसु हस्तयोरादधानः ॥ ५३६
१ ६ १ ०५०५a तक्षद्यदी मनसो वेनतो वाग्ज्येष्ठस्य धर्मं द्युक्षोरनीके ।
१ ६ १ ०५०५c आदीमायन्वरमा वावशाना जुष्टं पतिं कलशे गाव इन्दुम् ॥ ५३७
१ ६ १ ०५०६a साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
१ ६ १ ०५०६c हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ५३८
१ ६ १ ०५०७a अधि यदस्मिन्वाजिनीव शुभः स्पर्धन्ते धियः सूरे न विशः ।
१ ६ १ ०५०७c अपो वृणानः पवते कवीयन्व्रजं न पशुवर्धनाय मन्म ॥ ५३९
१ ६ १ ०५०८a इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
१ ६ १ ०५०८c हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ ५४०
१ ६ १ ०५०९a अया पवा पवस्वैना वसूनि माँश्चत्व इन्द्रो सरसि प्र धन्व ।
१ ६ १ ०५०९c ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ५४१
१ ६ १ ०५१०a महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
१ ६ १ ०५१०c अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ ५४२

१ ६ १ ०५११a असर्जि वक्वा रथ्ये यथाजौ धिया मनोता प्रथमा मनीष ।
१ ६ १ ०५११c दश स्वसारो अधि सानो अव्ये मृजन्ति वह्निँ सदनेष्वच्छ ॥ ५४३
१ ६ १ ०५१२a अपामिवेदूर्मयस्तर्त्तुराणाः प्र मनीषा ईरते सोममच्छ ।
१ ६ १ ०५१२c नमस्यन्तीरुप च यन्ति सं चाच विशन्त्युशतीरुशन्तम् ॥ ५४४

षष्ठ प्रपाठकः । द्वितीयोऽर्धः

१ ६ २ ०६०१a पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
१ ६ २ ०६०१c अप श्वानँ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ ५४५
१ ६ २ ०६०२a अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
१ ६ २ ०६०२c पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ ५४६
१ ६ २ ०६०३a सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
१ ६ २ ०६०३c पवित्रवन्तो अक्षरन्देवान्गच्छन्तु वो मदाः ॥ ५४७
१ ६ २ ०६०४a सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
१ ६ २ ०६०४c मित्राः स्वाना अरेपसः स्वाध्यः स्वर्विदः ॥ ५४८
१ ६ २ ०६०५a अभी नो वाजसातमँ रयिमर्ष शतस्पृहम् ।
१ ६ २ ०६०५c इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ ५४९
१ ६ २ ०६०६a अभी नवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।
१ ६ २ ०६०६c वत्सं न पूर्व आयुनि जातँ रिहन्ति मातरः ॥ ५५०
१ ६ २ ०६०७a आ हर्यताय धृष्णवे धनुष्टन्वन्ति पौँस्यम् ।
१ ६ २ ०६०७c शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः ॥ ५५१
१ ६ २ ०६०८a परि त्यँ हर्यतँ हरिं बभ्रुं पुनन्ति वारेण ।
१ ६ २ ०६०८c यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥ ५५२
१ ६ २ ०६०९a प्र सुन्वानास्यान्धसो मर्तो न वष्ट तद्वचः ।
१ ६ २ ०६०९c अप श्वानमराधसँ हता मखं न भृगवः ॥ ५५३

१ ६ २ ०७०१a अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
१ ६ २ ०७०१c आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ ५५४
१ ६ २ ०७०२a अचोदसो नो धन्वन्त्विन्दवः प्र स्वानासो बृहद्देवेषु हरयः ।
१ ६ २ ०७०२c वि चिदश्नाना इषयो अरातयोऽर्यो नः सन्तु सनिषन्तु नो धियः ॥ ५५५
१ ६ २ ०७०३a एष प्र कोशे मधुमाँ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टमः ।
१ ६ २ ०७०३c अभ्यृ३तस्य सुदुघा घृतश्चुतो वाश्रा अर्षन्ति पयसा च धेनवः ॥ ५५६
१ ६ २ ०७०४a प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतँ सखा सख्युर्न प्र मिनाति सङ्गिरम् ।
१ ६ २ ०७०४c मर्य इव युवतिभिः समर्षति सोमः कलशे शतयामना पथा ॥ ५५७
१ ६ २ ०७०५a धर्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
१ ६ २ ०७०५c हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाँसि कृणुषे नदीष्वा ॥ ५५८
१ ६ २ ०७०६a वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः ।
१ ६ २ ०७०६c प्राणा सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ ५५९
१ ६ २ ०७०७a त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।

१ ६ २ ०७०७c चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ ५६०
१ ६ २ ०७०८a इन्द्राय सोम सुषुतः परि स्रवापामीवा भवतु रक्षसा सह ।
१ ६ २ ०७०८c मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह सन्त्विन्दवः ॥ ५६१
१ ६ २ ०७०९a असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
१ ६ २ ०७०९c पुनानो वारमत्येष्यव्ययँ श्येनो न योनिं घृतवन्तमासदत् ॥ ५६२
१ ६ २ ०७१०a प्र देवमच्छा मधुमन्त इन्दवोऽसिष्यदन्त गाव आ न धेनवः ।
१ ६ २ ०७१०c बर्हिषदो वचनावन्त ऊधभिः परिस्रुतमुस्रिया निर्णिजं धिरे ॥ ५६३
१ ६ २ ०७११a अञ्जते व्यञ्जते समञ्जते क्रतुँ रिहन्ति मध्वाभ्यञ्जते ।
१ ६ २ ०७११c सिन्धोरुऽच्छ्वासे पतयन्तमुक्षणँ हिरण्यपावाः पशुमप्सु गृभ्णते ॥ ५६४
१ ६ २ ०७१२a पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
१ ६ २ ०७१२c अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत ॥ ५६५

१ ६ २ ०८०१a इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
१ ६ २ ०८०१c श्रुष्टे जातास इन्दवः स्वर्विदः ॥ ५६६
१ ६ २ ०८०२a प्र धन्वा सोम जागृविरिन्द्रायेन्दो परि स्रव ।
१ ६ २ ०८०२c द्युमन्तँ शुष्ममा भर स्वर्विदम् ॥ ५६७
१ ६ २ ०८०३a सखाय आ नि षीदत पुनानाय प्र गायत ।
१ ६ २ ०८०३c शिशुं न यज्ञैः परि भूषत श्रिये ॥ ५६८
१ ६ २ ०८०४a तं वः सखायो मदाय पुनानमभि गायत ।
१ ६ २ ०८०४c शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ ५६९
१ ६ २ ०८०५a प्राणा शिशुर्महीनाँ हिन्वन्नृतस्य दीधितिम् ।
१ ६ २ ०८०५c विश्वा परि प्रिया भुवदध द्विता ॥ ५७०
१ ६ २ ०८०६a पवस्व देववीतय इन्दो धाराभिरोजसा ।
१ ६ २ ०८०६c आ कलशं मधुमान्त्सोम नः सदः ॥ ५७१
१ ६ २ ०८०७a सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
१ ६ २ ०८०७c अग्रे वाचः पवमानः कनिक्रदत् ॥ ५७२
१ ६ २ ०८०८a प्र पुनानाय वेधसे सोमाय वच उच्यते ।
१ ६ २ ०८०८c भृतिं न भरा मतिभिर्जुजोषते ॥ ५७३
१ ६ २ ०८०९a गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
१ ६ २ ०८०९c शुचिं च वर्णमधि गोषु धार्य ॥ ५७४
१ ६ २ ०८१०a अस्मभ्यं त्वा वसुविदमभि वाणीरनूषत ।
१ ६ २ ०८१०c गोभिष्टे वर्णमभि वासयामसि ॥ ५७५
१ ६ २ ०८११a पवते हर्यतो हरिरति ह्वराँसि रँह्या ।
१ ६ २ ०८११c अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ५७६
१ ६ २ ०८१२a परि कोशं मधुश्चुतँ सोमः पुनानो अर्षति ।
१ ६ २ ०८१२c अभि वाणीर्ऋषीणाँ सप्ता नूषत ॥ ५७७

१ ६ २ ०९०१a पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।

१ ६ २ ०९०१c महि द्युक्षतमो मदः ॥ ५७८
१ ६ २ ०९०२a अभि द्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् ।
१ ६ २ ०९०२c वि कोशं मध्यमं युव ॥ ५७९
१ ६ २ ०९०३a आ सोता परि षिञ्चताश्वं न स्तोममप्तुरँ रजस्तुरम् ।
१ ६ २ ०९०३c वनप्रक्षमुदप्रुतम् ॥ ५८०
१ ६ २ ०९०४a एतमु त्यं मदच्युतँ सहस्रधारं वृषभं दिवोदुहम् ।
१ ६ २ ०९०४c विश्वा वसूनि बिभ्रतम् ॥ ५८१
१ ६ २ ०९०५a स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।
१ ६ २ ०९०५c सोमो यः सुक्षितीनाम् ॥ ५८२
१ ६ २ ०९०६a त्वँ ह्या३ङ्ग दैव्या पवमान जनिमानि द्युमत्तमः ।
१ ६ २ ०९०६c अमृतत्वाय घोषयन् ॥ ५८३
१ ६ २ ०९०७a एष स्य धारया सुतोऽव्यो वारेभिः पवते मदिन्तमः ।
१ ६ २ ०९०७c क्रीडन्नूर्मिरपामिव ॥ ५८४
१ ६ २ ०९०८a य उस्रिया अपि या अन्तरश्मनि निर्गा अकृन्तदोजसा ।
१ ६ २ ०९०८c अभि व्रजं तत्निषे गव्यमश्व्यं वर्मीव धृष्णवा रुज ।
१ ६ २ ०९०८e ॐ वर्मीव धृष्णवा रुज ॥ ५८५

॥ इति सौम्यं पावमानं पर्व काण्डम् ॥

॥ इति पूर्वार्चिकः ॥

आरण्य आर्चिकः

आरण्य काण्डम्

२ ० ० ०१०१a इन्द्र ज्येष्ठं न आ भर ओजिष्ठं पुपुरि श्रवः ।
२ ० ० ०१०१c यद्दिधृक्षेम वज्रहस्त रोदसी ओभे सुशिप्र पप्राः ॥ ५८६
२ ० ० ०१०२a इन्द्रो राजा जगतश्चर्षणीनामधिक्षमा विश्वरूपं यदस्य ।
२ ० ० ०१०२c ततो ददाति दाशुषे वसूनि चोदद्राध उपस्तुतं चिदर्वाक् ॥ ५८७
२ ० ० ०१०३a यस्येदमा रजोयुजस्तुजे जने वनँ स्वः ।
२ ० ० ०१०३c इन्द्रस्य रन्त्यं बृहत् ॥ ५८८
२ ० ० ०१०४a उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमँ श्रथाय ।
२ ० ० ०१०४c अथादित्य व्रते वयं तवानागसो अदितये स्याम ॥ ५८९
२ ० ० ०१०५a त्वया वयं पवमानेन सोम भरे कृतं वि चिनुयाम शश्वत् ।
२ ० ० ०१०५c तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥ ५९०
२ ० ० ०१०६a इमं वृषणं कृणुतैकमिन्माम् ॥ ५९१
२ ० ० ०१०७a स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
२ ० ० ०१०७c वरिवोवित्परिस्रव ॥ ५९२
२ ० ० ०१०८a एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
२ ० ० ०१०८c सिषासन्तो वनामहे ॥ ५९३

२ ० ० ०१०९a अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम ।
२ ० ० ०१०९c यो मा ददाति स इदेवमावदहमन्नमन्नमदन्तमद्मि ॥ ५९४

२ ० ० ०२०१a त्वमेतदधारयः कृष्णासु रोहिणीषु च ।
२ ० ० ०२०१c परुष्णीषु रुशत्पयः ॥ ५९५
२ ० ० ०२०२a अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
२ ० ० ०२०२c मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमादधुः ॥ ५९६
२ ० ० ०२०३a इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
२ ० ० ०२०३c इन्द्रो वज्री हिरण्ययः ॥ ५९७
२ ० ० ०२०४a इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
२ ० ० ०२०४c उग्र उग्राभिरूतिभिः ॥ ५९८
२ ० ० ०२०५a प्रथश्च यस्य सप्रथश्च नामानुष्टुभस्य हविषो हविर्यत् ।
२ ० ० ०२०५c धातुर्द्युतानात्सवितुश्च विष्णो रथन्तरमा जभारा वसिष्ठः ॥ ५९९
२ ० ० ०२०६a नियुत्वान्वायवा गह्ययँ शुक्रो अयामि ते ।
२ ० ० ०२०६c गन्तासि सुन्वतो गृहम् ॥ ६००
२ ० ० ०२०७a यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय ।
२ ० ० ०२०७c तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ ६०१

२ ० ० ०३०१a मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः ।
२ ० ० ०३०१c परमेष्ठी प्रजापतिर्दिवि द्यामिव दृँहतु ॥ ६०२
२ ० ० ०३०२a सं ते पयाँसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
२ ० ० ०३०२c आप्यायमानो अमृताय सोम दिवि श्रवाँस्युत्तमानि धिष्व ॥ ६०३
२ ० ० ०३०३a त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
२ ० ० ०३०३c त्वमातनोरुर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ६०४
२ ० ० ०३०४a अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
२ ० ० ०३०४c होतारं रत्नधातमम् ॥ ६०५
२ ० ० ०३०५a ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जनान् ।
२ ० ० ०३०५c ता जानतीरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ॥ ६०६
२ ० ० ०३०६a समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति ।
२ ० ० ०३०६c तमू शुचिँ शुचयो दीदिवाँसमपान्नपातमुप यन्त्यापः ॥ ६०७
२ ० ० ०३०७a आ प्रागाद्भद्रा युवतिरह्नः केतून्त्समीर्त्सति ।
२ ० ० ०३०७c अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री ॥ ६०८
२ ० ० ०३०८a प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे ।
२ ० ० ०३०८c वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥ ६०९
२ ० ० ०३०९a विश्वे देवा मम शृण्वन्तु यज्ञमुभे रोदसी अपां नपाच्च मन्म ।
२ ० ० ०३०९c मा वो वचाँसि परिचक्ष्याणि वोचँ सुम्नेष्विद्वो अन्तमा मदेम ॥ ६१०
२ ० ० ०३१०a यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती ।
२ ० ० ०३१०c यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम् ।

२ ० ० ०३१०e यशस्व्याइस्याः सँ सदोऽहं प्रवदिता स्याम् ॥ ६११
२ ० ० ०३११a इन्द्रस्य नु वीर्याणि प्रवोचं यानि चकार प्रथमानि वज्री ।
२ ० ० ०३११c अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ ६१२
२ ० ० ०३१२a अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।
२ ० ० ०३१२c त्रिधातुरर्को रजसो विमानोऽजस्रं ज्योतिर्हविरस्मि सर्वम् ॥ ६१३
२ ० ० ०३१३a पात्यग्निर्विपो अग्रं पदं वेः पाति यह्वश्चरणँ सूर्यस्य ।
२ ० ० ०३१३c पाति नाभा सप्तशीर्षाणमग्निः ॥ ६१४

२ ० ० ०४०१a भ्राजन्त्यग्ने समिधान दीदिवो जिह्वा चरत्यन्तरासनि ।
२ ० ० ०४०१c स त्वं नो अग्ने पयसा वसुविद्रयिं वर्चो दृशेऽदाः ॥ ६१५
२ ० ० ०४०२a वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः ।
२ ० ० ०४०२c वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः ॥ ६१६
२ ० ० ०४०३a सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
२ ० ० ०४०३c स भूमिँ सर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ६१७
२ ० ० ०४०४a त्रिपादूर्ध्व उदैत्पुरुषः पदोऽस्येहाभवत्पुनः ।
२ ० ० ०४०४c तथा विष्वङ् व्यक्रामदशनानशने अभि ॥ ६१८
२ ० ० ०४०५a पुरुष एवेदँ सर्वं यद्भूतं यच्च भाव्यम् ।
२ ० ० ०४०५c पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ६१९
२ ० ० ०४०६a तावानस्य महिमा ततो ज्यायाँश्च पूरुषः ।
२ ० ० ०४०६c उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६२०
२ ० ० ०४०७a ततो विराडजायत विराजो अधि पूरुषः ।
२ ० ० ०४०७c स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ६२१
२ ० ० ०४०८a मन्ये वाँ द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभि योजनम् ।
२ ० ० ०४०८c द्यावापृथिवी भवतँ स्योने ते नो मुञ्चतमँहसः ॥ ६२२
२ ० ० ०४०९a हरी त इन्द्र श्मश्रूण्युतो ते हरितौ हरि ।
२ ० ० ०४०९c तं त्वा स्तुवन्ति कवयः पुरुषासो वनर्गवः ॥ ६२३
२ ० ० ०४१०a यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत ।
२ ० ० ०४१०c सत्यस्य ब्रह्मणो वर्चस्तेन मा सँ सृजामसि ॥ ६२४
२ ० ० ०४११a सहस्तन्न इन्द्र दद्ध्योज ईशे ह्यस्य महतो विरप्शिन् ।
२ ० ० ०४११c क्रतुं न नृम्णँ स्थविरं च वाजं वृत्रेषु शत्रून्त्सुहना कृधी नः ॥ ६२५
२ ० ० ०४१२a सहर्षभाः सहवत्सा उदेत विश्वा रूपाणी बिभ्रतीर्द्व्यूध्नीः ।
२ ० ० ०४१२c उरुः पृथुरयं वो अस्तु लोक इमा आपः सुप्रपाणा इह स्त ॥ ६२६

२ ० ० ०५०१a अग्न आयूँषि पवस आसुवोर्जमिषं च नः ।
२ ० ० ०५०१c आरे बाधस्व दुच्छुनाम् ॥ ६२७
२ ० ० ०५०२a विभ्राड्बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
२ ० ० ०५०२c वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति ॥ ६२८
२ ० ० ०५०३a चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ।

२ ० ० ०५०३c आप्रा द्यावापृथिवी अन्तरिक्षँ सूर्य आत्मा जगतस्तस्थुषश्च ॥ ६२९
२ ० ० ०५०४a आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
२ ० ० ०५०४c पितरं च प्रयन्त्स्वः ॥ ६३०
२ ० ० ०५०५a अन्तश्चरति रोचनास्य प्राणादपानती ।
२ ० ० ०५०५c व्यख्यन्महिषो दिवम् ॥ ६३१
२ ० ० ०५०६a त्रिँषद्धाम वि राजति वाक्पतङ्गाय धीयते ।
२ ० ० ०५०६c प्रति वस्तोरह द्युभिः ॥ ६३२
२ ० ० ०५०७a अप त्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः ।
२ ० ० ०५०७c सूराय विश्वचक्षसे ॥ ६३३
२ ० ० ०५०८a अदृश्रन्नस्य केतवो वि रश्मयो जनाँ अनु ।
२ ० ० ०५०८c भ्राजन्तो अग्नयो यथा ॥ ६३४
२ ० ० ०५०९a तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
२ ० ० ०५०९c विश्वमाभासि रोचनम् ॥ ६३५
२ ० ० ०५१०a प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
२ ० ० ०५१०c प्रत्यङ् विश्वँ स्वर्दृशे ॥ ६३६
२ ० ० ०५११a येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
२ ० ० ०५११c त्वं वरुण पश्यसि ॥ ६३७
२ ० ० ०५१२a उद्यामेषि रजः पृथ्वहा मिमानो अक्तुभिः ।
२ ० ० ०५१२c पश्यञ्जन्मानि सूर्य ॥ ६३८
२ ० ० ०५१३a अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्र्यः ।
२ ० ० ०५१३c ताभिर्याति स्वयुक्तिभिः ॥ ६३९
२ ० ० ०५१४a सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
२ ० ० ०५१४c शोचिष्केशं विचक्षण ॥ ६४०
॥ इत्यारण्यं पर्व काण्डम् ॥

महानाम्न्य आर्चिकः
३ ० ० ०००१a विदा मघवन् विदा गातुमनुशँसिषो दिशः ।
३ ० ० ०००१c शिक्षा शचीनां पते पूर्वीणां पुरूवसो ॥ ६४१
३ ० ० ०००२a आभिष्ट्वमभिष्टिभिः स्वाऽ३न्नाँशुः ।
३ ० ० ०००२c प्रचेतन प्रचेतयेन्द्र द्युम्नाय न इषे ॥ ६४२
३ ० ० ०००३a एवा हि शक्रो राये वाजाय वज्रिवः ।
३ ० ० ०००३c शविष्ठ वज्रिन्नृञ्जसे मँहिष्ठ वज्रिन्नृञ्जस ।
३ ० ० ०००३e आ याहि पिब मत्स्व ॥ ६४३
३ ० ० ०००४a विदा राये सुवीर्यं भवो वाजानां पतिर्वशाँ अनु ।
३ ० ० ०००४c मँहिष्ठ वज्रिन्नृञ्जसे यः शविष्ठः शूराणाम् ॥ ६४४
३ ० ० ०००५a यो मँहिष्ठो मघोनामँशुर्न्न शोचिः ।
३ ० ० ०००५c चिकित्वो अभि नो नयेन्द्रो विदे तमु स्तुहि ॥ ६४५
३ ० ० ०००६a ईशे हि शक्रस्तमूतये हवामहे जेतारमपराजितम् ।

३ ० ० ०००६c  स नः स्वर्षदति द्विषः क्रतुश्छन्द ऋतं बृहत् ॥ ६४६
३ ० ० ०००७a  इन्द्रं धनस्य सातये हवामहे जेतारमपराजितम् ।
३ ० ० ०००७c  स नः स्वर्षदति द्विषः स नः स्वर्षदति द्विषः ॥ ६४७
३ ० ० ०००८a  पूर्वस्य यत्ते अद्रिवोँऽशुर्मदाय ।
३ ० ० ०००८c  सुम्न आ धेहि नो वसो पूर्तिः शविष्ठ शस्यते ।
३ ० ० ०००८e  वशी हि शक्रो नूनं तन्नव्यँ संन्यसे ॥ ६४८
३ ० ० ०००९a  प्रभो जनस्य वृत्रहन्त्समर्येषु ब्रवावहै ।
३ ० ० ०००९c  शूरो यो गोषु गच्छति सखा सुशेवो अद्वयुः ॥ ६४९

अथ पञ्च पुरीषपदानि

३ ० ० ००१०a  एवाह्योऽ३ऽ३ऽ३वा । एवा ह्यग्ने । एवाहीन्द्र ।
३ ० ० ००१०c  एवा हि पूषन् । एवा हि देवाः ॐ एवाहि देवाः ॥ ६५०

॥ इति पञ्च पुरीषपदानि ॥

॥ इति महानाम्न्यार्चिकः ॥

उत्तर आर्चिकः

प्रथम प्रपाठकः ।  प्रथमोऽर्धः

असितः काश्यपो देवलो वा। गायत्री। पवमानः सोमः।

४ १ १ ०१ ०१a  उपास्मै गायता नरः पवमानायेन्दवे ।
४ १ १ ०१ ०१c  अभि देवाँ इयक्षते ॥ ६५१
४ १ १ ०१ ०२a  अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः ।
४ १ १ ०१ ०२c  देवं देवाय देवयु ॥ ६५२
४ १ १ ०१ ०३a  स नः पवस्व शं गवे शं जनाय शमर्वते ।
४ १ १ ०१ ०३c  शँ राजन्नोषधीभ्यः ॥ ६५३

कश्यपो मारीचः। गायत्री। पवमानः सोमः।

४ १ १ ०२ ०१a  दविद्युतत्या रुचा परिष्टोभन्त्या कृपा ।
४ १ १ ०२ ०१c  सोमाः शुक्रा गवाशिरः ॥ ६५४
४ १ १ ०२ ०२a  हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् ।
४ १ १ ०२ ०२c  सीदन्तो वनुषो यथा ॥ ६५५
४ १ १ ०२ ०३a  ऋधक्सोम स्वस्तये सञ्जग्मानो दिवा कवे ।
४ १ १ ०२ ०३c  पवस्व सूर्यो दृशे ॥ ६५६

शतं वैखानसाः, गायत्री, पवमानः सोमः।

४ १ १ ०३ ०१a  पवमानस्य ते कवे वाजिन्त्सर्गा असृक्षते ।
४ १ १ ०३ ०१c  अर्वन्तो न श्रवस्यवः ॥ ६५७
४ १ १ ०३ ०२a  अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये ।
४ १ १ ०३ ०२c  अवावशन्त धीतयः ॥ ६५८

४ १ १ ०३ ०३a  अच्छा समुद्रमिन्दवोऽस्तं गावो न धेनवः ।
४ १ १ ०३ ०३c  अग्मन्नृतस्य योनिमा ॥ ६५९

भरद्वाजो बार्हस्पत्यः, गायत्री, अग्निः।
४ १ १ ०४ ०१a  अग्न आ याहि वीतये गृणानो हव्यदातये ।
४ १ १ ०४ ०१c  नि होता सत्सि बर्हिषि ॥ ६६०
४ १ १ ०४ ०२a  तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि ।
४ १ १ ०४ ०२c  बृहच्छोचा यविष्ठ्य ॥ ६६१
४ १ १ ०४ ०३a  स नः पृथु श्रवाय्यमच्छा देव विवाससि ।
४ १ १ ०४ ०३c  बृहदग्ने सुवीर्यम् ॥ ६६२

विश्वामित्रो गाथिनः जमदग्निर्वा, गायत्री, मित्रावरुणौ।
४ १ १ ०५ ०१a  आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
४ १ १ ०५ ०१c  मध्वा रजाँसि सुक्रतू ॥ ६६३
४ १ १ ०५ ०२a  उरुशँसा नमोवृधा मह्ना दक्षस्य राजथः ।
४ १ १ ०५ ०२c  द्राघिष्ठाभिः शुचिव्रता ॥ ६६४
४ १ १ ०५ ०३a  गृणाना जमदग्निना योनावृतस्य सीदतम् ।
४ १ १ ०५ ०३c  पातँ सोममृतावृधा ॥ ६६५

इरीम्बिठिः काण्वः। गायत्री। इन्द्रः।
४ १ १ ०६ ०३a  आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् ।
४ १ १ ०६ ०३c  एदं बर्हिः सदो मम ॥ ६६६
४ १ १ ०६ ०३a  आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना ।
४ १ १ ०६ ०३c  उप ब्रह्माणि नः शृणु ॥ ६६७
४ १ १ ०६ ०३a  ब्रह्माणस्त्वा युजा वयँ सोमपामिन्द्र सोमिनः ।
४ १ १ ०६ ०३c  सुतावन्तो हवामहे ॥ ६६८

विश्वामित्रो गाथिनः। गायत्री। इन्द्राग्नी।
४ १ १ ०७ ०१a  इन्द्राग्नी आ गतँ सुतं गीर्भिर्नभो वरेण्यम् ।
४ १ १ ०७ ०१c  अस्य पातं धियेषिता ॥ ६६९
४ १ १ ०७ ०२a  इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः ।
४ १ १ ०७ ०२c  अया पातमिमँ सुतम् ॥ ६७०
४ १ १ ०७ ०३a  इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।
४ १ १ ०७ ०३c  ता सोमस्येह तृम्पताम् ॥ ६७१

अमहीयुराङ्गिरसः। गायत्री। पवमानः सोमः।
४ १ १ ०८ ०१a  उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
४ १ १ ०८ ०१c  उग्रँ शर्म महि श्रवः ॥ ६७२

४ १ १ ०८ ०२a स न इन्द्राय यज्यवे वरुणाय मरुद्ध्यः ।
४ १ १ ०८ ०२c वरिवोवित्परि स्रव ॥ ६७३
४ १ १ ०८ ०३a एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
४ १ १ ०८ ०३c सिषासन्तो वनामहे ॥ ६७४

४ १ १ ०९ ०१a पुनानः सोम धारयापो वसानो अर्षसि ।
४ १ १ ०९ ०१c आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ ६७५
४ १ १ ०९ ०२a दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नँ सधस्थमासदत् ।
४ १ १ ०९ ०२c आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः ॥ ६७६

४ १ १ १० ०१a प्र तु द्रव परि कोशं नि षीद नृभिः पुनानो अभि वाजमर्ष ।
४ १ १ १० ०१c अश्वं न त्वा वाजिनं मर्जयन्तोऽच्छा बर्ही रशनाभिर्नयन्ति ॥ ६७७
४ १ १ १० ०२a स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः ।
४ १ १ १० ०२c पिता देवानां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥ ६७८
४ १ १ १० ०३a ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन ।
४ १ १ १० ०३c स चिद्विवेद निहितं यदासामपीच्या३ं गुह्यं नाम गोनाम् ॥ ६७९

४ १ १ ११ ०१a अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
४ १ १ ११ ०१c ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥ ६८०
४ १ १ ११ ०२a न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
४ १ १ ११ ०२c अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥ ६८१

४ १ १ १२ ०१a कया नश्चित्र आ भुवदूती सदावृधः सखा ।
४ १ १ १२ ०१c कया शचिष्ठया वृता ॥ ६८२
४ १ १ १२ ०२a कस्त्वा सत्यो मदानां मँहिष्ठो मत्सदन्धसः ।
४ १ १ १२ ०२c दृढा चिदारुजे वसु ॥ ६८३
४ १ १ १२ ०३a अभी षु णः सखीनामविता जरितॄणाम् ।
४ १ १ १२ ०३c शतं भवास्यूतये ॥ ६८४

४ १ १ १३ ०१a तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
४ १ १ १३ ०१c अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥ ६८५
४ १ १ १३ ०२a द्युक्षँ सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् ।
४ १ १ १३ ०२c क्षुमन्तं वाजँ शतिनँ सहस्रिणं मक्षू गोमन्तमीमहे ॥ ६८६

४ १ १ १४ ०१a तरोभिर्वो विदद्वसुमिन्द्रँ सबाध ऊतये ।
४ १ १ १४ ०१c बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥ ६८७
४ १ १ १४ ०२a न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः ।
४ १ १ १४ ०२c य आदृत्या शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ ६८८

४ १ १ १५ ०१a  स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
४ १ १ १५ ०१c  इन्द्राय पातवे सुतः ॥ ६८९
४ १ १ १५ ०२a  रक्षोहा विश्वचर्षणिरभि योनिमयोहते ।
४ १ १ १५ ०२c  द्रोणे सधस्थमासदत् ॥ ६९०
४ १ १ १५ ०३a  वरिवोधातमो भुवो मँहिष्ठो वृत्रहन्तमः ।
४ १ १ १५ ०३c  पर्षि राधो मघोनाम् ॥ ६९१

४ १ १ १६ ०१a  पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
४ १ १ १६ ०१c  महि द्युक्षतमो मदः ॥ ६९२
४ १ १ १६ ०२a  यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।
४ १ १ १६ ०२c  स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः ॥ ६९३

४ १ १ १७ ०१a  इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
४ १ १ १७ ०१c  श्रुष्टे जातास इन्दवः स्वर्विदः ॥ ६९४
४ १ १ १७ ०२a  अयं भराय सानसिरिन्द्राय पवते सुतः ।
४ १ १ १७ ०२c  सोमो जैत्रस्य चेतति यथा विदे ॥ ६९५
४ १ १ १७ ०३a  अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् ।
४ १ १ १७ ०३c  वज्रं च वृषणं भरत्समप्सुजित् ॥ ६९६

४ १ १ १८ ०१a  पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
४ १ १ १८ ०१c  अप श्वानँ श्नथिष्टन सखायो दीर्घजिह्व्यम् ॥ ६९७
४ १ १ १८ ०२a  यो धारया पावकया परिप्रस्यन्दते सुतः ।
४ १ १ १८ ०२c  इन्दुरश्वो न कृत्व्यः ॥ ६९८
४ १ १ १८ ०३a  तं दुरोषमभी नरः सोमं विश्वाच्या धिया ।
४ १ १ १८ ०३c  यज्ञाय सन्त्वद्रयः ॥ ६९९

४ १ १ १९ ०१a  अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
४ १ १ १९ ०१c  आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥ ७००
४ १ १ १९ ०२a  ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।
४ १ १ १९ ०२c  दधाति पुत्रः पित्रोरपीच्याꣳ नाम तृतीयमधि रोचनं दिवः ॥ ७०१
४ १ १ १९ ०३a  अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये ।
४ १ १ १९ ०३c  अभी ऋतस्य दोहना अनूषताधि त्रिपृष्ठ उषसो वि राजसि ॥ ७०२

४ १ १ २० ०१a  यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे ।
४ १ १ २० ०१c  प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शँसिषम् ॥ ७०३
४ १ १ २० ०२a  ऊर्जो नपातँ स हिनायमस्मयुर्दाशेम हव्यदातये ।
४ १ १ २० ०२c  भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम् ॥ ७०४

४ १ १ २१ ०१a एह्यू षु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
४ १ १ २१ ०१c एभिर्वर्धास इन्दुभिः ॥ ७०५
४ १ १ २१ ०२a यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।
४ १ १ २१ ०२c तत्रा योनिं कृणवसे ॥ ७०६
४ १ १ २१ ०३a न हि ते पूर्तमक्षिपद्भुवन्नेमानां पते ।
४ १ १ २१ ०३c अथा दुवो वनवसे ॥ ७०७

४ १ १ २२ ०१a वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।
४ १ १ २२ ०१c वज्रिञ्चित्रँ हवामहे ॥ ७०८
४ १ १ २२ ०२a उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
४ १ १ २२ ०२c त्वामिध्यवितारं ववृमहे सखाय इन्द्र सानसिम् ॥ ७०९

४ १ १ २३ ०१a अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
४ १ १ २३ ०१c उदेव ग्मन्त उदभिः ॥ ७१०
४ १ १ २३ ०२a वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि ।
४ १ १ २३ ०२c वावृध्वाँसं चिदद्रिवो दिवेदिवे ॥ ७११
४ १ १ २३ ०३a पुञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा ।
४ १ १ २३ ०३c इन्द्रवाहा स्वर्विदा ॥ ७१२

प्रथम प्रपाठकः । द्वितीयोऽर्धः

४ १ २ ०१ ०१a पान्तमा वो अन्धस इन्द्रमभि प्र गायत ।
४ १ २ ०१ ०१c विश्वासाहँ शतक्रतुं मँहिष्ठं चर्षणीनाम् ॥ ७१३
४ १ २ ०१ ०२a पुरुहूतं पुरुष्टुतं गाथान्याइँ सनश्रुतम् ।
४ १ २ ०१ ०२c इन्द्र इति ब्रवीतन ॥ ७१४
४ १ २ ०१ ०३a इन्द्र इन्नो महोनां दाता वाजानां नृतुः ।
४ १ २ ०१ ०३c महाँ अभिज्ञ्वा यमत् ॥ ७१५

४ १ २ ०२ ०१a प्र व इन्द्राय मादनँ हर्यश्वाय गायत ।
४ १ २ ०२ ०१c सखायः सोमपाव्ने ॥ ७१६
४ १ २ ०२ ०२a शँसेदुक्थँ सुदानव उत द्युक्षं यथ नरः ।
४ १ २ ०२ ०२c चकृमा सत्यराधसे ॥ ७१७
४ १ २ ०२ ०३a त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो ।
४ १ २ ०२ ०३c त्वँ हिरण्ययुर्वसो ॥ ७१८

४ १ २ ०३ ०१a वयमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः ।
४ १ २ ०३ ०१c कण्वा उक्थेभिर्जरन्ते ॥ ७१९
४ १ २ ०३ ०२a न घेमन्यदा पपन वज्रिन्नपसो नविष्टौ ।

४ १ २ ०३ ०२c तवेदु स्तोमैश्चिकेत ॥ ७२०
४ १ २ ०३ ०३a इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।
४ १ २ ०३ ०३c यन्ति प्रमादमतन्द्राः ॥ ७२१

४ १ २ ०४ ०१a इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः ।
४ १ २ ०४ ०१c अर्कमर्चन्तु कारवः ॥ ७२२
४ १ २ ०४ ०२a यस्मिन्विश्वा अधि श्रियो रणन्ति सप्त सँसदः ।
४ १ २ ०४ ०२c इन्द्रँ सुते हवामहे ॥ ७२३
४ १ २ ०४ ०३a त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत ।
४ १ २ ०४ ०३c तमिद्वर्धन्तु नो गिरः ॥ ७२४

४ १ २ ०५ ०१a अयं त इन्द्र सोमो निपूतो अधि बर्हिषि ।
४ १ २ ०५ ०१c एहीमस्य द्रवा पिब ॥ ७२५
४ १ २ ०५ ०२a शाचिगो शाचिपूजनायँ रणाय ते सुतः ।
४ १ २ ०५ ०२c आखण्डल प्र हूयसे ॥ ७२६
४ १ २ ०५ ०३a यस्ते शृङ्गवृषो णपात्प्रणपात्कुण्डपाय्यः ।
४ १ २ ०५ ०३c न्यस्मिं दध्र आ मनः ॥ ७२७

४ १ २ ०६ ०१a आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभँ सं गृभाय ।
४ १ २ ०६ ०१c महाहस्ति दक्षिणेन ॥ ७२८
४ १ २ ०६ ०२a विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् ।
४ १ २ ०६ ०२c तुविमात्रमवोभिः ॥ ७२९
४ १ २ ०६ ०३a न हि त्वा शूर देवा न मर्तासो दित्सन्तम् ।
४ १ २ ०६ ०३c भीमं न गां वारयन्ते ॥ ७३०

४ १ २ ०७ ०१a अभि त्वा वृषभा सुते सुतँ सृजामि पीतये ।
४ १ २ ०७ ०१c तृम्पा व्यश्नुही मदम् ॥ ७३१
४ १ २ ०७ ०२a मा त्वा मूरा अविष्यवो मोपहस्वान आ दभन् ।
४ १ २ ०७ ०२c मा कीं ब्रह्मद्विषं वनः ॥ ७३२
४ १ २ ०७ ०३a इह त्वा गोपरीणसं महे मन्दन्तु राधसे ।
४ १ २ ०७ ०३c सरो गौरो यथा पिब ॥ ७३३

४ १ २ ०८ ०१a इदम् वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।
४ १ २ ०८ ०१c अनाभयिन्ररिमा ते ॥ ७३४
४ १ २ ०८ ०२a नृभिर्धौतः सुतो अश्नैरव्या वारैः परिपूतः ।
४ १ २ ०८ ०२c अश्वो न निक्तो नदीषु ॥ ७३५
४ १ २ ०८ ०३a तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः ।
४ १ २ ०८ ०३c इन्द्र त्वास्मिन्त्सधमादे ॥ ७३६

४ १ २ ०९ ०१a इदँ ह्यन्वोजसा सुतँ राधानां पते ।
४ १ २ ०९ ०१c पिबा त्वा३स्य गिर्वणः ॥ ७३७
४ १ २ ०९ ०२a यस्ते अनु स्वधामसत्सुते नि यच्छ तन्वम् ।
४ १ २ ०९ ०२c स त्वा ममत्तु सोम्यम् ॥ ७३८
४ १ २ ०९ ०३a प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः ।
४ १ २ ०९ ०३c प्र बाहू शूर राधसा ॥ ७३९

४ १ २ १० ०१a आ त्वेता नि षीदतेन्द्रमभि प्र गायत ।
४ १ २ १० ०१c सखाय स्तोमवाहसः ॥ ७४०
४ १ २ १० ०२a पुरूतमं पुरूणामीशानं वार्याणाम् ।
४ १ २ १० ०२c इन्द्रँ सोमे सचा सुते ॥ ७४१
४ १ २ १० ०३a स घा नो योग आ भुवत्स राये स पुरन्ध्या ।
४ १ २ १० ०३c गमद्वाजेभिरा स नः ॥ ७४२

४ १ २ ११ ०१a योगेयोगे तवस्तरं वाजेवाजे हवामहे ।
४ १ २ ११ ०१c सखाय इन्द्रमूतये ॥ ७४३
४ १ २ ११ ०२a अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ।
४ १ २ ११ ०२c यं ते पूर्वं पिता हुवे ॥ ७४४
४ १ २ ११ ०३a आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः ।
४ १ २ ११ ०३c वाजेभिरुप नो हवम् ॥ ७४५

४ १ २ १२ ०१a इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थ्यम् ।
४ १ २ १२ ०१c विदे वृधस्य दक्षस्य महाँ हि षः ॥ ७४६
४ १ २ १२ ०२a स प्रथमे व्योमनि देवानाँ सदने वृधः ।
४ १ २ १२ ०२c सुपारः सुश्रवस्तमः समप्सुजित् ॥ ७४७
४ १ २ १२ ०३a तमु हुवे वाजसातय इन्द्रं भराय शुष्मिणम् ।
४ १ २ १२ ०३c भवा नः सुम्ने अन्तमः सखा वृधे ॥ ७४८

४ १ २ १३ ०१a एना वो अग्निं नमसोर्जो नपातमा हुवे ।
४ १ २ १३ ०१c प्रियं चेतिष्ठमरतिँ स्वध्वरं विश्वस्य दूतममृतम् ॥ ७४९
४ १ २ १३ ०२a स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः ।
४ १ २ १३ ०२c सुब्रह्मा यज्ञः सुशमी वसूनां देवँ राधो जनानाम् ॥ ७५०

४ १ २ १४ ०१a प्रत्यु अदर्श्यायत्यू३च्छन्ती दुहिता दिवः ।
४ १ २ १४ ०१c अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥ ७५१
४ १ २ १४ ०२a उदुस्रियाः सृजते सूर्यः सचा उद्यन्नक्षत्रमर्चिवत् ।
४ १ २ १४ ०२c तवेदुषो व्युषि सूर्यस्य च सं भक्तेन गमेमहि ॥ ७५२

४ १ २ १५ ०१a इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
४ १ २ १५ ०१c अयं वामह्वेऽवसे शचीवसू विशंविशँ हि गच्छथः ॥ ७५३
४ १ २ १५ ०२a युवं चित्रं ददथुर्भोजनं नरा चोदेथाँ सूनृतावते ।
४ १ २ १५ ०२c अर्वाग्रथँ समनसा नि यच्छतं पिबतँ सोम्यं मधु ॥ ७५४

४ १ २ १६ ०१a अस्य प्रत्नामनु द्युतँ शुक्रं दुदुह्रे अह्रयः ।
४ १ २ १६ ०१c पयः सहस्रसामृषिम् ॥ ७५५
४ १ २ १६ ०२a अयँ सूर्य इवोपदृगयँ सराँसि धावति ।
४ १ २ १६ ०२c सप्त प्रवत आ दिवम् ॥ ७५६
४ १ २ १६ ०३a अयं विश्वानि तिष्ठति पुनानो भुवनोपरि ।
४ १ २ १६ ०३c सोमो देवो न सूर्यः ॥ ७५७

४ १ २ १७ ०१a एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
४ १ २ १७ ०१c हरिः पवित्रे अर्षति ॥ ७५८
४ १ २ १७ ०२a एष प्रत्नेन मन्मना देवो देवेभ्यस्परि ।
४ १ २ १७ ०२c कविर्विप्रेण वावृधे ॥ ७५९
४ १ २ १७ ०३a दुहानः प्रत्नमित्पयः पवित्रे परि षिच्यसे ।
४ १ २ १७ ०३c क्रन्दं देवाँ अजीजनः ॥ ७६०

४ १ २ १८ ०१a उप शिक्षापतस्थुषो भियसमा धेहि शत्रवे ।
४ १ २ १८ ०१c पवमान विदा रयिम् ॥ ७६१
४ १ २ १८ ०२a उषो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
४ १ २ १८ ०२c इन्दुं देवा अयासिषुः ॥ ७६२
४ १ २ १८ ०३a उपास्मै गायता नरः पवमानायेन्दवे ।
४ १ २ १८ ०३c अभि देवाँ इयक्षते ॥ ७६३

४ १ २ १९ ०१a प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः ।
४ १ २ १९ ०१c वनानि महिषा इव ॥ ७६४
४ १ २ १९ ०२a अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया ।
४ १ २ १९ ०२c वाजं गोमन्तमक्षरन् ॥ ७६५
४ १ २ १९ ०३a सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
४ १ २ १९ ०३c सोमा अर्षन्तु विष्णवे ॥ ७६६

४ १ २ २० ०१a प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।
४ १ २ २० ०१c अँशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ ७६७
४ १ २ २० ०२a आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः ।
४ १ २ २० ०२c तमीँ हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः ॥ ७६८

४ १ २ २१ ०१a प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् ।
४ १ २ २१ ०१c सुता विदथे अक्रमुः ॥ ७६९
४ १ २ २१ ०२a आदीँ हँसो यथा गणं विश्वस्यावीवशन्मतिम् ।
४ १ २ २१ ०२c अत्यो न गोभिरज्यते ॥ ७७०
४ १ २ २१ ०३a आदीं त्रितस्य योषणो हरिँ हिन्वन्त्यद्रिभिः ।
४ १ २ २१ ०३c इन्दुमिन्द्राय पीतये ॥ ७७१

४ १ २ २२ ०१a अया पवस्व देवयु रेभन्पवित्रं पर्येषि विश्वतः ।
४ १ २ २२ ०१c मधोर्धारा असृक्षत ॥ ७७२
४ १ २ २२ ०२a पवते हर्यतो हरिरति ह्वराँसि रँह्या ।
४ १ २ २२ ०२c अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥ ७७३
४ १ २ २२ ०३a प्र सुन्वानास्यान्धसो मर्तो न वष्ट तद्वचः ।
४ १ २ २२ ०३c अप श्वानमराधसँ हता मखं न भृगवः ॥ ७७४

द्वितीय प्रपाठकः । प्रथमोऽर्धः

४ २ १ ०१ ०१a पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः ।
४ २ १ ०१ ०१c अभि विश्वानि काव्या ॥ ७७५
४ २ १ ०१ ०२a त्वँ समुद्रिया अपोऽग्रियो वाच ईरयन् ।
४ २ १ ०१ ०२c पवस्व विश्वचर्षणे ॥ ७७६
४ २ १ ०१ ०३a तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे ।
४ २ १ ०१ ०३c तुभ्यं धावन्ति धेनवः ॥ ७७७

४ २ १ ०२ ०१a पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने ।
४ २ १ ०२ ०१c विश्वा अप द्विषो जहि ॥ ७७८
४ २ १ ०२ ०२a यस्य ते सख्ये वयँ सासह्याम पृतन्यतः ।
४ २ १ ०२ ०२c तवेन्दो द्युम्न उत्तमे ॥ ७७९
४ २ १ ०२ ०३a या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे ।
४ २ १ ०२ ०३c रक्षा समस्य नो निदः ॥ ७८०

४ २ १ ०३ ०१a वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः ।
४ २ १ ०३ ०१c वृषा धर्माणि दध्रिषे ॥ ७८१
४ २ १ ०३ ०२a वृष्णस्ते वृष्ण्यँ शवो वृषा वनं वृषा सुतः ।
४ २ १ ०३ ०२c स त्वं वृषन्वृषेदसि ॥ ७८२
४ २ १ ०३ ०३a अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः ।
४ २ १ ०३ ०३c वि नो राये दुरो वृधि ॥ ७८३

४ २ १ ०४ ०१a वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।

४ २ १ ०४ ०१c पवमान स्वर्दृशम् ॥ ७८४
४ २ १ ०४ ०२a यदद्भिः परिशिच्यसे मर्मृज्यमान आयुभिः ।
४ २ १ ०४ ०२c द्रोणे सधस्थमश्नुषे ॥ ७८५
४ २ १ ०४ ०३a आ पवस्व सुवीर्यं मन्दमानः स्वायुध ।
४ २ १ ०४ ०३c इहो ष्विन्दवा गहि ॥ ७८६

४ २ १ ०५ ०१a पवमानस्य ते वयं पवित्रमभ्युन्दतः ।
४ २ १ ०५ ०१c सखित्वमा वृणीमहे ॥ ७८७
४ २ १ ०५ ०२a ये ते पवित्रमूर्मयोऽभिक्षरन्ति धारया ।
४ २ १ ०५ ०२c तेभिर्नः सोम मृडय ॥ ७८८
४ २ १ ०५ ०३a स नः पुनान आ भर रयिं वीरवतीमिषम्
४ २ १ ०५ ०३c ईशानः सोम विश्वतः ॥ ७८९

४ २ १ ०६ ०१a अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
४ २ १ ०६ ०१c अस्य यज्ञस्य सुक्रतुम् ॥ ७९०
४ २ १ ०६ ०२a अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् ।
४ २ १ ०६ ०२c हव्यवाहं पुरुप्रियम् ॥ ७९१
४ २ १ ०६ ०३a अग्ने देवाँ इहा वह जज्ञानो वृक्तबर्हिषे ।
४ २ १ ०६ ०३c असि होता न ईड्यः ॥ ७९२

४ २ १ ०७ ०१a मित्रं वयँ हवामहे वरुणँ सोमपीतये ।
४ २ १ ०७ ०१c य जाता पूतदक्षसा ॥ ७९३
४ २ १ ०७ ०२a ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती ।
४ २ १ ०७ ०२c ता मित्रावरुणा हुवे ॥ ७९४
४ २ १ ०७ ०३a वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः ।
४ २ १ ०७ ०३c करतां नः सुराधसः ॥ ७९५

४ २ १ ०८ ०१a इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
४ २ १ ०८ ०१c इन्द्रं वाणीरनूषत ॥ ७९६
४ २ १ ०८ ०२a इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
४ २ १ ०८ ०२c इन्द्रो वज्री हिरण्ययः ॥ ७९७
४ २ १ ०८ ०३a इन्द्र वाजेषु नोऽव सहस्रप्रधनेषु च ।
४ २ १ ०८ ०३c उग्र उग्राभिरूतिभिः ॥ ७९८
४ २ १ ०८ ०४a इन्द्रो दीर्धाय चक्षस आ सूर्यँ रोहयद्दिवि ।
४ २ १ ०८ ०४c वि गोभिरद्रिमैरयत् ॥ ७९९

४ २ १ ०९ ०१a इन्द्रे अग्ना नमो बृहत्सुवृक्तिमेरयामहे ।
४ २ १ ०९ ०१c धिया धेना अवस्यवः ॥ ८००

४ २ १ ०९ ०२a ता हि शश्वन्त ईडत इत्था विप्रास ऊतये ।
४ २ १ ०९ ०२c सबाधो वाजसातये ॥ ८०१
४ २ १ ०९ ०३a ता वां गीर्भिर्विपन्युवः प्रयस्वन्तो हवामहे ।
४ २ १ ०९ ०३c मेधसाता सनिष्यवः ॥ ८०२

४ २ १ १० ०१a वृषा पवस्व धारया मरुत्वते च मत्सरः ।
४ २ १ १० ०१c दिश्वा दधान ओजसा ॥ ८०३
४ २ १ १० ०२a तं त्वा धर्त्तारमोण्यो३ः पवमान स्वर्दृशम् ।
४ २ १ १० ०२c हिन्वे वाजेषु वाजिनम् ॥ ८०४
४ २ १ १० ०३a अया चित्तो विपानया हरिः पवस्व धारया ।
४ २ १ १० ०३c युजं वाजेषु चोदय ॥ ८०५

४ २ १ ११ ०१a वृषा शोणो अभिकनिक्रदद्गा नदयन्नेषि पृथिवीमुत द्याम् ।
४ २ १ ११ ०१c इन्द्रस्येव वग्नुरा शृण्व आजौ प्रचोदयन्नर्षसि वाचमेमाम् ॥ ८०६
४ २ १ ११ ०२a रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमँशुम् ।
४ २ १ ११ ०२c पवमान सन्तनिमेषि कृण्वन्निन्द्राय सोम परिषिच्यमानः ॥ ८०७
४ २ १ ११ ०३a एवा पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नुम् ।
४ २ १ ११ ०३c परि वर्णं भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः ॥ ८०८

४ २ १ १२ ०१a त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
४ २ १ १२ ०१c त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥ ८०९
४ २ १ १२ ०२a स त्वं नश्चित्र वज्रहस्त धृष्णुया मह स्तवानो अद्रिवः ।
४ २ १ १२ ०२c गामश्वँ रथ्यमिन्द्र सं किर सत्रा वाजं न जिग्युषे ॥ ८१०

४ २ १ १३ ०१a अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
४ २ १ १३ ०१c यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥ ८११
४ २ १ १३ ०२a शतानीकेव प्र जिगाति धृष्णुया हन्ति वृत्राणि दाशुषे ।
४ २ १ १३ ०२c गिरेरिव प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः ॥ ८१२

४ २ १ १४ ०१a त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
४ २ १ १४ ०१c स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥ ८१३
४ २ १ १४ ०२a मत्स्वा सुशिप्रिन्हरिवस्तमीमहे त्वया भूषन्ति वेधसः ।
४ २ १ १४ ०२c तव श्रवाँस्युपमान्युक्थ्य सुतेष्विन्द्र गिर्वणः ॥ ८१४

४ २ १ १५ ०१a यस्ते मदो वरेण्यस्तेना पवस्वान्धसा ।
४ २ १ १५ ०१c देवावीरघशँसहा ॥ ८१५
४ २ १ १५ ०२a जघ्निर्वृत्रममित्रियँ सस्निर्वाजं दिवेदिवे ।
४ २ १ १५ ०२c गोषातिरश्वसा असि ॥ ८१६

४ २ १ १५ ०३a सम्मिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभि ।
४ २ १ १५ ०३c सीदं च्छ्येनो न योनिमा ॥ ८१७

४ २ १ १६ ०१a अयं पूषा रयिर्भगः सोमः पुनानो अर्षति ।
४ २ १ १६ ०१c पतिर्विश्वस्य भूमनो व्यख्यद्रोदसी उभे ॥ ८१८
४ २ १ १६ ०२a समु प्रिया अनूषत गावो मदाय घृष्वयः ।
४ २ १ १६ ०२c सोमासः कृण्वते पथः पवमानास इन्दवः ॥ ८१९
४ २ १ १६ ०३a य ओजिष्ठस्तमा भर पवमान श्रवाय्यम् ।
४ २ १ १६ ०३c यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥ ८२०

४ २ १ १७ ०१a वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां दिवः ।
४ २ १ १७ ०१c प्राणा सिन्धूनां कलशाँ अचिक्रददिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ ८२१
४ २ १ १७ ०२a मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशाँ असिष्यदत् ।
४ २ १ १७ ०२c त्रितस्य नाम जनयन्मधु क्षरन्निन्द्रस्य वायूँ सख्याय वर्धयन् ॥ ८२२
४ २ १ १७ ०३a अयं पुनान उषसो अरोचयदयँ सिन्धुभ्यो अभवदु लोककृत् ।
४ २ १ १७ ०३c अयं त्रिः सप्त दुदुहान आशिरँ सोमो हृदे पवते चारु मत्सरः ॥ ८२३

४ २ १ १८ ०१a एवा ह्यसि वीरयुरेवा शूर उत स्थिरह् ।
४ २ १ १८ ०१c एवा ते राध्यं मनः ॥ ८२४
४ २ १ १८ ०२a एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः ।
४ २ १ १८ ०२c अधा चिदिन्द्र नः सचा ॥ ८२५
४ २ १ १८ ०३a मो षु ब्रह्मेव तदिन्द्रयुर्भुवो वाजानां पते ।
४ २ १ १८ ०३c मत्स्वा सुतस्य गोमतः ॥ ८२६

४ २ १ १९ ०१a इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
४ २ १ १९ ०१c रथीतमँ रथीनां वाजानाँ सत्पतिं पतिम् ॥ ८२७
४ २ १ १९ ०२a सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते ।
४ २ १ १९ ०२c त्वामभि प्र नोनुमो जेतारमपराजितम् ॥ ८२८
४ २ १ १९ ०३a पूर्वीरिन्द्रस्य रातयो न वि दस्यन्त्यूतयः ।
४ २ १ १९ ०३c यदा वाजस्य गोमत स्तोतृभ्यो मँहते मघम् ॥ ८२९

द्वितीय प्रपाठकः । द्वितीयोऽर्धः
४ २ २ ०१ ०१a एत असृग्रमिन्दवस्तिरः पवित्रमाशवः ।
४ २ २ ०१ ०१c विश्वान्यभि सौभगा ॥ ८३०
४ २ २ ०१ ०२a विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः ।
४ २ २ ०१ ०२c त्मना कृण्वन्तो अर्वतः ॥ ८३१
४ २ २ ०१ ०३a कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम् ।
४ २ २ ०१ ०३c इडामस्मभ्यँ संयतम् ॥ ८३२

४ २ २ ०२ ०१a राजा मेधाभिरीयते पवमानो मनावधि ।
४ २ २ ०२ ०१c अन्तरिक्षेण यातवे ॥ ८३३
४ २ २ ०२ ०२a आ नः सोम सहो जुवो रूपं न वर्चसे भर ।
४ २ २ ०२ ०२c सुष्वाणो देववीतये ॥ ८३४
४ २ २ ०२ ०३a आ न इन्दो शतग्विनं गवां पोषँ स्वश्व्यम् ।
४ २ २ ०२ ०३c वहा भगत्तिमूतये ॥ ८३५

४ २ २ ०३ ०१a तं त्वा नृम्णानि बिभ्रतँ सधस्थेषु महो दिवः ।
४ २ २ ०३ ०१c चारुँ सुकृत्ययेमहे ॥ ८३६
४ २ २ ०३ ०२a संवृक्तधृष्णुमुक्थ्यं महामहिव्रतं मदम् ।
४ २ २ ०३ ०२c शतं पुरो रुरुक्षणिम् ॥ ८३७
४ २ २ ०३ ०३a अतस्त्वा रयिरभ्ययद्राजानँ सुक्रतो दिवः ।
४ २ २ ०३ ०३c सुपर्णो अव्यथी भरत् ॥ ८३८
४ २ २ ०३ ०४a अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे ।
४ २ २ ०३ ०४c अभिष्टिकृद्विचर्षणिः ॥ ८३९
४ २ २ ०३ ०५a विश्वस्मा इत्स्वर्दृशे साधारणँ रजस्तुरम् ।
४ २ २ ०३ ०५c गोपामृतस्य विर्भरत् ॥ ८४०

४ २ २ ०४ ०१a इषे पवस्व धारया मृज्यमानो मनीषिभिः ।
४ २ २ ०४ ०१c इन्दो रुचाभि गा इहि ॥ ८४१
४ २ २ ०४ ०२a पुनानो वरिवस्कृध्यूर्जं जनाय गिर्वणः ।
४ २ २ ०४ ०२c हरे सृजान आशिरम् ॥ ८४२
४ २ २ ०४ ०३a पुनानो देववीतय इन्द्रस्य याहि निष्कृतम् ।
४ २ २ ०४ ०३c द्युतानो वाजिभिर्हितः ॥ ८४३

४ २ २ ०५ ०१a अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा ।
४ २ २ ०५ ०१c हव्यवाड्जुह्वास्यः ॥ ८४४
४ २ २ ०५ ०२a यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।
४ २ २ ०५ ०२c तस्य स्म प्राविता भव ॥ ८४५
४ २ २ ०५ ०३a यो अग्निं देववीतये हविष्माँ आविवासति ।
४ २ २ ०५ ०३c तस्मै पावक मृडय ॥ ८४६

४ २ २ ०६ ०१a मित्रँ हुवे पूतदक्षं वरुणं च रिशादसम् ।
४ २ २ ०६ ०१c धियं घृताचीँ साधन्ता ॥ ८४७
४ २ २ ०६ ०२a ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।
४ २ २ ०६ ०२c क्रतुं बृहन्तमाशाथे ॥ ८४८
४ २ २ ०६ ०३a कवी नो मित्रावरुणा तुविजाता उरुक्षया ।

४ २ २ ०६ ०३c  दक्षं दधाते अपसम् ॥ ८४९

४ २ २ ०७ ०१a  इन्द्रेण सँ हि दृक्षसे सञ्जग्मानो अबिभ्युषा ।
४ २ २ ०७ ०१c  मन्दू समानवर्चसा ॥ ८५०
४ २ २ ०७ ०२a  आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।
४ २ २ ०७ ०२c  दधाना नाम यज्ञियम् ॥ ८५१
४ २ २ ०७ ०३a  वीडु चिदारुजत्नुभिर्गुहा चिदिन्द्र वह्निभिः ।
४ २ २ ०७ ०३c  अविन्द उस्रिया अनु ॥ ८५२

४ २ २ ०८ ०१a  ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम् ।
४ २ २ ०८ ०१c  इन्द्राग्नी न मर्धतः ॥ ८५३
४ २ २ ०८ ०२a  उग्रा विघनिना मृध इन्द्राग्नी हवामहे ।
४ २ २ ०८ ०२c  ता नो मृडात ईदृशे ॥ ८५४
४ २ २ ०८ ०३a  हथो वृत्राण्यार्या हथो दासानि सत्पती ।
४ २ २ ०८ ०३c  हथो विश्वा अप द्विषः ॥ ८५५

४ २ २ ०९ ०१a  अभि सोमास आयवः पवन्ते मद्यं मदम् ।
४ २ २ ०९ ०१c  समुद्रस्याधि विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥ ८५६
४ २ २ ०९ ०२a  तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् ।
४ २ २ ०९ ०२c  अर्षा मित्रस्य वरुणस्य धर्मणा प्र हिन्वान ऋतं बृहत् ॥ ८५७
४ २ २ ०९ ०३a  नृभिर्येमाणो हर्यतो विचक्षणो राजा देवः समुद्र्यः ॥ ८५८

४ २ २ १० ०१a  तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम् ।
४ २ २ १० ०१c  गावो यन्ति गोपतिं पृच्छमानाः सोमं यन्ति मतयो वावशानाः ॥ ८५९
४ २ २ १० ०२a  सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः पृच्छमानाः ।
४ २ २ १० ०२c  सोमः सुत ऋच्यते पूयमानः सोमे अर्कास्त्रिष्टुभः सं नवन्ते ॥ ८६०
४ २ २ १० ०३a  एवा नः सोम परिषिच्यमान आ पवस्व पूयमानः स्वस्ति ।
४ २ २ १० ०३c  इन्द्रमा विश बृहता मदेन वर्धया वाचं जनया पुरन्धिम् ॥ ८६१

४ २ २ ११ ०१a  यद्द्याव इन्द्र ते शतँशतं भूमीरुत स्युः ।
४ २ २ ११ ०१c  न त्वा वज्रिन्त्सहस्रँ सुर्या अनु न जातमष्ट रोदसी ॥ ८६२
४ २ २ ११ ०२a  आ पप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।
४ २ २ ११ ०२c  अस्माँ अव मघवन्गोमति व्रजे वज्रिञ्चित्राभिरूतिभिः ॥ ८६३

४ २ २ १२ ०१a  वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
४ २ २ १२ ०१c  पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ ८६४
४ २ २ १२ ०२a  स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः ।
४ २ २ १२ ०२c  कदा सुतं तृषाण ओक आ गम इन्द्र स्वब्दीव वँसगः ॥ ८६५

४ २ २ १२ ०३a कण्वेभिर्धृष्णवा धृषद्वाजं दर्षि सहस्रिणम् ।
४ २ २ १२ ०३c पिशङ्गरूपं मघवन्विचर्षणे मक्षू गोमन्तमीमहे ॥ ८६६

४ २ २ १३ ०१a तरणिरित्सिषासति वाजं पुरन्ध्या युजा ।
४ २ २ १३ ०१c आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ ८६७
४ २ २ १३ ०२a न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधन्तँ रयिर्नशत् ।
४ २ २ १३ ०२c सुशक्तिरिन्मघवं तुभ्यं मावते देष्णं यत्पार्ये दिवि ॥ ८६८

४ २ २ १४ ०१a तिस्रो वाच उदीरते गावो मिमन्ति धेनवः ।
४ २ २ १४ ०१c हरिरेति कनिक्रदत् ॥ ८६९
४ २ २ १४ ०२a अभि ब्रह्मीरनूषत यह्वीरृतस्य मातरः ।
४ २ २ १४ ०२c मर्जयन्तीर्दिवः शिशुम् ॥ ८७०
४ २ २ १४ ०३a रायः समुद्राँश्चतुरोऽस्मभ्यँ सोम विश्वतः ।
४ २ २ १४ ०३c आ पवस्व सहस्रिणः ॥ ८७१

४ २ २ १५ ०१a सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः ।
४ २ २ १५ ०१c पवित्रवन्तो अक्षरं देवान्गच्छन्तु वो मदाः ॥ ८७२
४ २ २ १५ ०२a इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् ।
४ २ २ १५ ०२c वाचस्पतिर्मखस्यते विश्वस्येशान ओजसाः ॥ ८७३
४ २ २ १५ ०३a सहस्रधारः पवते समुद्रो वाचमीङ्खयः ।
४ २ २ १५ ०३c सोमस्पती रयीणाँ सखेन्द्रस्य दिवेदिवे ॥ ८७४

४ २ २ १६ ०१a पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
४ २ २ १६ ०१c अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत ॥ ८७५
४ २ २ १६ ०२a तपोष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवो व्यस्थिरन् ।
४ २ २ १६ ०२c अवन्त्यस्य पवीतारमाशवो दिवः पृष्ठमधि रोहन्ति तेजसा ॥ ८७६
४ २ २ १६ ०३a अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु वाजयुः ।
४ २ २ १६ ०३c मायाविनो ममिरे अस्य मायया नृचक्षसः पितरो गर्भमा दधुः ॥ ८७७

४ २ २ १७ ०१a प्र मँहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।
४ २ २ १७ ०१c उपस्तुतासो अग्नये ॥ ८७८
४ २ २ १७ ०२a आ वँसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।
४ २ २ १७ ०२c कुविन्नो अस्य सुमतिर्भवीयस्यच्छा वाजेभिरागमत् ॥ ८७९

४ २ २ १८ ०१a तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
४ २ २ १८ ०१c उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ ८८०
४ २ २ १८ ०२a येन ज्योतीँष्यायवे मनवे च विवेदिथ ।
४ २ २ १८ ०२c मन्दानो अस्य बर्हिषो वि राजसि ॥ ८८१

४ २ २ १८ ०३a तदद्या चित्त उक्थिनोऽनु ष्टुवन्ति पूर्वथा ।
४ २ २ १८ ०३c वृषपत्नीरपो जया दिवेदिवे ॥ ८८२

४ २ २ १९ ०१a श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
४ २ २ १९ ०१c सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ८८३
४ २ २ १९ ०२a यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत् ।
४ २ २ १९ ०२c चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥ ८८४
४ २ २ १९ ०३a तमु ष्टवाम यं गिर इन्द्रमुक्थानि वावृधुः ।
४ २ २ १९ ०३c पुरूण्यस्य पौँस्या सिषासन्तो वनामहे ॥ ८८५

तृतीय प्रपाठकः । प्रथमोऽर्धः

४ ३ १ ०१ ०१a प्र त आश्विनीः पवमान धेनवो दिव्या असृग्रन्पयसा धरीमणि ।
४ ३ १ ०१ ०१c प्रान्तरिक्षात्स्थाविरीस्ते असृक्षत ये त्वा मृजन्त्यृषिषाण वेधसः ॥ ८८६
४ ३ १ ०१ ०२a उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परि यन्ति केतवः ।
४ ३ १ ०१ ०२c यदी पवित्रे अधि मृज्यते हरिः सत्ता नि योनौ कलशेषु सीदति ॥ ८८७
४ ३ १ ०१ ०३a विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परि यन्ति केतवः ।
४ ३ १ ०१ ०३c व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि ॥ ८८८

४ ३ १ ०२ ०१a पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।
४ ३ १ ०२ ०१c ज्योतिर्वैश्वानरं बृहत् ॥ ८८९
४ ३ १ ०२ ०२a पवमान रसस्तव मदो राजन्नदुच्छुनः ।
४ ३ १ ०२ ०२c वि वारमव्यमर्षति ॥ ८९०
४ ३ १ ०२ ०३a पवमानस्य ते रसो दक्षो वि राजति द्युमान् ।
४ ३ १ ०२ ०३c ज्योतिर्विश्वँ स्वर्दृशे ॥ ८९१

४ ३ १ ०३ ०१a प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः ।
४ ३ १ ०३ ०१c घ्नन्तः कृष्णामप त्वचम् ॥ ८९२
४ ३ १ ०३ ०२a सुवितस्य मनामहेऽति सेतुं दुराय्यम् ।
४ ३ १ ०३ ०२c साह्याम दस्युमव्रतम् ॥ ८९३
४ ३ १ ०३ ०३a शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः ।
४ ३ १ ०३ ०३c चरन्ति विद्युतो दिवि ॥ ८९४
४ ३ १ ०३ ०४a आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् ।
४ ३ १ ०३ ०४c अश्ववत्सोम वीरवत् ॥ ८९५
४ ३ १ ०३ ०५a पवस्व विश्वचर्षण आ मही रोदसी पृण ।
४ ३ १ ०३ ०५c उषाः सूर्यो न रश्मिभिः ॥ ८९६
४ ३ १ ०३ ०६a परि नः शर्मयन्त्या धारया सोम विश्वतः ।
४ ३ १ ०३ ०६c सरा रसेव विष्टपम् ॥ ८९७

४ ३ १ ०४ ०१a आशुरर्ष बृहन्मते परि प्रियेण धाम्ना ।
४ ३ १ ०४ ०१c यत्र देवा इति ब्रुवन् ॥ ८९८
४ ३ १ ०४ ०२a परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः ।
४ ३ १ ०४ ०२c वृष्टिं दिवः परि स्रव ॥ ८९९
४ ३ १ ०४ ०३a अयँ स यो दिवस्परि रघुयामा पवित्र आ ।
४ ३ १ ०४ ०३c सिन्धोरूर्मा व्यक्षरत् ॥ ९००
४ ३ १ ०४ ०४a सुत एति पवित्र आ त्विषिं दधान ओजसा ।
४ ३ १ ०४ ०४c विचक्षाणो विरोचयन् ॥ ९०१
४ ३ १ ०४ ०५a आविवासन्परावतो अथो अर्वावतः सुतः ।
४ ३ १ ०४ ०५c इन्द्राय सिच्यते मधु ॥ ९०२
४ ३ १ ०४ ००a समीचीना अनूषत हरिँ हिन्वन्त्यद्रिभिः ।
४ ३ १ ०४ ००c इन्दुमिन्द्राय पीतये ॥ ९०३

४ ३ १ ०५ ०१a हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम् ।
४ ३ १ ०५ ०१c महामिन्दुं महीयुवः ॥ ९०४
४ ३ १ ०५ ०२a पवमान रुचारुचा देवो देवेभ्यः सुतः ।
४ ३ १ ०५ ०२c विश्वा वसून्या विश ॥ ९०५
४ ३ १ ०५ ०३a आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः ।
४ ३ १ ०५ ०३c इषे पवस्व संयतम् ॥ ९०६

४ ३ १ ०६ ०१a जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ।
४ ३ १ ०६ ०१c घृतप्रतीको बृहता दिविस्पृषा द्युमद्वि भाति भरतेभ्यः शुचिः ॥ ९०७
४ ३ १ ०६ ०२a त्वामग्ने अङ्गिरसो गुहा हितमन्वविन्दञ्छिश्रियाणं वनेवने ।
४ ३ १ ०६ ०२c स जायसे मथ्यमानः सहो महत्वामाहुः सहसस्पुत्रमङ्गिरः ॥ ९०८
४ ३ १ ०६ ०३a यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते ।
४ ३ १ ०६ ०३c इन्द्रेण देवैः सरथँ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः ॥ ९०९

४ ३ १ ०७ ०१a अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।
४ ३ १ ०७ ०१c ममेदिह श्रुतँ हवम् ॥ ९१०
४ ३ १ ०७ ०२a राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे ।
४ ३ १ ०७ ०२c सहस्रस्थूण आशाते ॥ ९११
४ ३ १ ०७ ०३a ता सम्राजा घृतासुती आदित्या दानुनस्पती ।
४ ३ १ ०७ ०३c सचेते अनवह्वरम् ॥ ९१२

४ ३ १ ०८ ०१a इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
४ ३ १ ०८ ०१c जघान नवतीर्नव ॥ ९१३
४ ३ १ ०८ ०२a इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् ।
४ ३ १ ०८ ०२c तद्विदच्छर्यणावति ॥ ९१४

४ ३ १ ०८ ०३a अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।
४ ३ १ ०८ ०३c इत्था चन्द्रमसो गृहे ॥ ९१५

४ ३ १ ०९ ०१a इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः ।
४ ३ १ ०९ ०१c अभ्राद्वृष्टिरिवाजनि ॥ ९१६
४ ३ १ ०९ ०२a शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः ।
४ ३ १ ०९ ०२c ईशाना पिप्यतं धियः ॥ ९१७
४ ३ १ ०९ ०३a मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये ।
४ ३ १ ०९ ०३c मा नो रीरधतं निदे ॥ ९१८

४ ३ १ १० ०१a पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।
४ ३ १ १० ०१c मरुद्भ्यो वायवे मदः ॥ ९१९
४ ३ १ १० ०२a सं देवैः शोभते वृषा कविर्योनावधि प्रियः ।
४ ३ १ १० ०२c पवमानो अदाभ्यः ॥ ९२०
४ ३ १ १० ०३a पवमान धिया हितो३ऽभि योनिं कनिक्रदत् ।
४ ३ १ १० ०३c धर्मणा वायुमारुहः ॥ ९२१

४ ३ १ ११ ०१a तवाहँ सोम रारण सख्य इन्दो दिवेदिवे ।
४ ३ १ ११ ०१c पुरूणि बभ्रो नि चरन्ति मामव परिधीँ रति ताँइहि ॥ ९२२
४ ३ १ ११ ०२a तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्र ऊधनि ।
४ ३ १ ११ ०२c घृणा तपन्तमति सूर्यँ परः शकुना इव पप्तिम ॥ ९२३

४ ३ १ १२ ०१a पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः ।
४ ३ १ १२ ०१c शुम्भन्ति विप्रं धीतिभिः ॥ ९२४
४ ३ १ १२ ०२a आ योनिमरुणो रुहद्गमदिन्द्रं वृषा सुतम् ।
४ ३ १ १२ ०२c ध्रुवे सदसि सीदतु ॥ ९२५
४ ३ १ १२ ०३a नू नो रयिं महामिन्दोऽस्मभ्यँ सोम विश्वतः ।
४ ३ १ १२ ०३c आ पवस्व सहस्रिणम् ॥ ९२६

४ ३ १ १३ ०१a पिबा सोममिन्द्र मदन्तु त्वा यं ते सुषाव हर्यश्वाद्रिः ।
४ ३ १ १३ ०१c सोतुर्बाहुभ्याँ सुयतो नार्वा ॥ ९२७
४ ३ १ १३ ०२a यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हँसि ।
४ ३ १ १३ ०२c स त्वामिन्द्र प्रभूवसो ममत्तु ॥ ९२८
४ ३ १ १३ ०३a बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम् ।
४ ३ १ १३ ०३c इमा ब्रह्म सधमादे जुषस्व ॥ ९२९

४ ३ १ १४ ०१a विश्वाः पृतना अभिभूतरं नरः सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे ।
४ ३ १ १४ ०१c क्रत्वे वरे स्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम् ॥ ९३०

४ ३ १ १४ ०२a नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे ।
४ ३ १ १४ ०२c सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः ॥ ९३१
४ ३ १ १४ ०३a समु रेभसो अस्वरन्निन्द्रँ सोमस्य पीतये ।
४ ३ १ १४ ०३c स्वःपतिर्यदी वृधे धृतव्रतो ह्योजसा समूतिभिः ॥ ९३२

४ ३ १ १५ ०१a यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
४ ३ १ १५ ०१c विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥ ९३३
४ ३ १ १५ ०२a इन्द्रं तँ शुम्भ्य पुरुहन्मन्नवसे यस्य द्विता विधर्त्तरि ।
४ ३ १ १५ ०२c हस्तेन वज्रः प्रति धायि दर्शतो महां देवो न सूर्यः ॥ ९३४

४ ३ १ १६ ०१a परि प्रिया दिवः कविर्वयाँसि नप्त्योर्हितः ।
४ ३ १ १६ ०१c स्वानैर्याति कविक्रतुः ॥ ९३५
४ ३ १ १६ ०२a स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् ।
४ ३ १ १६ ०२c महान्मही ऋतावृधा ॥ ९३६
४ ३ १ १६ ०३a प्रप्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः ।
४ ३ १ १६ ०३c वीत्यर्ष पनिष्टये ॥ ९३७

४ ३ १ १७ ०१a त्वँ ह्या३ङ्ग दैव्या पवमान जनिमानि द्युमत्तमः ।
४ ३ १ १७ ०१c अमृतत्वाय घोषयन् ॥ ९३८
४ ३ १ १७ ०२a येना नवग्वो दध्यङ्ङपोर्णुते येन विप्रास आपिरे ।
४ ३ १ १७ ०२c देवानाँ सुम्ने अमृतस्य चारुणो येन श्रवाँस्याशत ॥ ९३९

४ ३ १ १८ ०१a सोमः पुनान ऊर्मिणाव्यं वारं वि धावति ।
४ ३ १ १८ ०१c अग्रे वाचः पवमानः कनिक्रदत् ॥ ९४०
४ ३ १ १८ ०२a धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम् ।
४ ३ १ १८ ०२c अभि त्रिपृष्ठं मतयः समस्वरन् ॥ ९४१
४ ३ १ १८ ०३a असर्जि कलशाँ अभि मीढ्वान्त्सप्तिर्न वाजयुः ।
४ ३ १ १८ ०३c पुनानो वाचं जनयन्नसिष्यदत् ॥ ९४२

४ ३ १ १९ ०१a सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
४ ३ १ १९ ०१c जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ॥ ९४३
४ ३ १ १९ ०२a ब्रह्मा देवानां पदवीः कवीनां ऋषिर्विप्राणां महिषोमृगाणाम् ।
४ ३ १ १९ ०२c श्येनो गृध्राणाँ स्वधितिर्वनानाँ सोमः पवित्रमत्येति रेभन् ॥ ९४४
४ ३ १ १९ ०३a प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिर स्तोमान्पवमानो मनीषाः ।
४ ३ १ १९ ०३c अन्तः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन् ॥ ९४५

४ ३ १ २० ०१a अग्निं वो वृधन्तमध्वराणां पुरूतमम् ।
४ ३ १ २० ०१c अच्छा नप्त्रे सहस्वते ॥ ९४६

४ ३ १ २० ०२a अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या ।
४ ३ १ २० ०२c अस्य क्रत्वा यशस्वतः ॥ ९४७
४ ३ १ २० ०३a अयं विश्वा अभि श्रियोऽग्निर्देवेषु पत्यते ।
४ ३ १ २० ०३c आ वाजैरुप नो गमत् ॥ ९४८

४ ३ १ २१ ०१a इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
४ ३ १ २१ ०१c शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ९४९
४ ३ १ २१ ०२a न किष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे ।
४ ३ १ २१ ०२c न किष्ट्वानु मज्मना न किः स्वश्व आनशे ॥ ९५०
४ ३ १ २१ ०३a इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन ।
४ ३ १ २१ ०३c सुता अमत्सुरिन्दवो ज्येष्ठं नमस्यता सहः ॥ ९५१

४ ३ १ २२ ०१a इन्द्र जुषस्व प्र वहा याहि शूर हरिह ।
४ ३ १ २२ ०१c पिबा सुतस्य मतिर्न मधोश्चकानश्चारुर्मदाय ॥ ९५२
४ ३ १ २२ ०२a इन्द्र जठरं नव्यं न पृणस्व मधोर्दिवो न ।
४ ३ १ २२ ०२c अस्य सुतस्य स्वा३र्नोप त्वा मदाः सुवाचो अस्थुः ॥ ९५३
४ ३ १ २२ ०३a इन्द्रस्तुराषाण्मित्रो न जघान वृत्रं यतिर्न ।
४ ३ १ २२ ०३c बिभेद वलं भृगुर्न ससाहे शत्रून्मदे सोमस्य ॥ ९५४

तृतीय प्रपाठकः । द्वितीयोऽर्धः

४ ३ २ ०१ ०१a गोवित्पवस्व वसुविद्धिरण्यविद्रेतोधा इन्दो भुवनेष्वर्पितः ।
४ ३ २ ०१ ०१c त्वँ सुवीरो असि सोम विश्ववित्तं त्वा नर उप गिरेम आसते ॥ ९५५
४ ३ २ ०१ ०२a त्वं नृचक्षा असि सोम विश्वतः पवमान वृषभ ता वि धावसि ।
४ ३ २ ०१ ०२c स नः पवस्व वसुमद्धिरण्यवद्वयँ स्याम भुवनेषु जीवसे ॥ ९५६
४ ३ २ ०१ ०३a ईशान इमा भुवनानि ईयसे युजान इन्दो हरितः सुपर्ण्यः ।
४ ३ २ ०१ ०३c तास्ते क्षरन्तु मधुमद्घृतं पयस्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥ ९५७

४ ३ २ ०२ ०१a पवमानस्य विश्ववित्प्र ते सर्गा असृक्षत ।
४ ३ २ ०२ ०१c सूर्यस्येव न रश्मयः ॥ ९५८
४ ३ २ ०२ ०२a केतुं कृण्वं दिवस्परि विश्वा रूपाभ्यर्षसि ।
४ ३ २ ०२ ०२c समुद्रः सोम पिन्वसे ॥ ९५९
४ ३ २ ०२ ०३a जज्ञानो वाचमिष्यसि पवमान विधर्मणि ।
४ ३ २ ०२ ०३c क्रन्दं देवो न सूर्यः ॥ ९६०

४ ३ २ ०३ ०१a प्र सोमासो अधन्विषुः पवमानास इन्दवः ।
४ ३ २ ०३ ०१c श्रीणाना अप्सु वृञ्जते ॥ ९६१
४ ३ २ ०३ ०२a अभि गावो अधन्विषुरापो न प्रवता यतीः ।
४ ३ २ ०३ ०२c पुनाना इन्द्रमाशत ॥ ९६२

४ ३ २ ०३ ०३a  प्र पवमान धन्वसि सोमेन्द्राय मादनः ।
४ ३ २ ०३ ०३c  नृभिर्यतो वि नीयसे ॥ ९६३
४ ३ २ ०३ ०४a  इन्दो यदद्रिभिः सुतः पवित्रं परिदीयसे ।
४ ३ २ ०३ ०४c  अरमिन्द्रस्य धाम्ने ॥ ९६४
४ ३ २ ०३ ०५a  त्वँ सोम नृमादनः पवस्व चर्षणीधृतिः ।
४ ३ २ ०३ ०५c  सस्निर्यो अनुमाद्यः ॥ ९६५
४ ३ २ ०३ ०६a  पवस्व वृत्रहन्तम उक्थेभिरनुमाद्यः ।
४ ३ २ ०३ ०६c  शुचिः पावको अद्भुतः ॥ ९६६
४ ३ २ ०३ ०७a  शुचिः पावक उच्यते सोमः सुतः स मधुमान् ।
४ ३ २ ०३ ०७c  देवावीरघशँसहा ॥ ९६७

४ ३ २ ०४ ०१a  प्र कविर्देववीतयेऽव्या वारेभिरव्यत ।
४ ३ २ ०४ ०१c  साह्वान्विश्वा अभि स्पृधः ॥ ९६८
४ ३ २ ०४ ०२a  स हि ष्मा जरितृभ्य आ वाजं गोमन्तमिन्वति ।
४ ३ २ ०४ ०२c  पवमानः सहस्रिणम् ॥ ९६९
४ ३ २ ०४ ०३a  परि विश्वानि चेतसा मृज्यसे पवसे मती ।
४ ३ २ ०४ ०३c  स नः सोम श्रवो विदः ॥ ९७०
४ ३ २ ०४ ०४a  अभ्यर्ष बृहद्यशो मघवद्भ्यो ध्रुवँ रयिम् ।
४ ३ २ ०४ ०४c  इषँ स्तोतृभ्य आ भर ॥ ९७१
४ ३ २ ०४ ०५a  त्वँ राजेव सुव्रतो गिरः सोमाविवेशिथ ।
४ ३ २ ०४ ०५c  पुनानो वह्ने अद्भुत ॥ ९७२
४ ३ २ ०४ ०६a  स वह्निरप्सु दुष्टरो मृज्यमानो गभस्त्योः ।
४ ३ २ ०४ ०६c  सोमश्चमूषु सीदति ॥ ९७३
४ ३ २ ०४ ०७a  क्रीडुर्मखो न मँहयुः पवित्रँ सोम गच्छसि ।
४ ३ २ ०४ ०७c  दधत्स्तोत्रे सुवीर्यम् ॥ ९७४

४ ३ २ ०५ ०१a  यवंयवं नो अन्धसा पुष्टंपुष्टं परि स्रव ।
४ ३ २ ०५ ०१c  विश्वा च सोम सौभगा ॥ ९७५
४ ३ २ ०५ ०२a  इन्दो यथा तव स्तवो यथा ते जातमन्धसः ।
४ ३ २ ०५ ०२c  नि बर्हिषि प्रिये सदः ॥ ९७६
४ ३ २ ०५ ०३a  उत नो गोविदश्ववित्पवस्व सोमान्धसा ।
४ ३ २ ०५ ०३c  मक्षूतमेभिरहभिः ॥ ९७७
४ ३ २ ०५ ०४a  यो जिनाति न जीयते हन्ति शत्रुमभीत्य ।
४ ३ २ ०५ ०४c  स पवस्व सहस्रजित् ॥ ९७८

४ ३ २ ०६ ०१a  यास्ते धारा मधुश्चुतोऽसृग्रमिन्द ऊतये ।
४ ३ २ ०६ ०१c  ताभिः पवित्रमासदः ॥ ९७९
४ ३ २ ०६ ०२a  सो अर्षेन्द्राय पीतये तिरो वाराण्यव्यया ।

४ ३ २ ०६ ०२c सीदन्नृतस्य योनिमा ॥ ९८०
४ ३ २ ०६ ०३a त्वँ सोम परि स्रव स्वादिष्ठो अङ्गिरोभ्यः ।
४ ३ २ ०६ ०३c वरिवोविद्घृतं पयः ॥ ९८१

४ ३ २ ०७ ०१a तव श्रियो वर्ष्यस्येव विद्युतोग्नेश्चिकित्र उषसामिवेतयः ।
४ ३ २ ०७ ०१c यदोषधीरभिसृष्टो वनानि च परि स्वयं चिनुषे अन्नमासनि ॥ ९८२
४ ३ २ ०७ ०२a वातोपजूत इषितो वशाँ अनु तृषु यदन्ना वेविषद्वितिष्ठसे ।
४ ३ २ ०७ ०२c आ ते यतन्ते रथ्यो३ यथा पृथक्शर्धाँस्यग्ने अजरस्य धक्षतः ॥ ९८३
४ ३ २ ०७ ०३a मेधाकारं विदथस्य प्रसाधनमग्निँ होतारं परिभूतरं मतिम् ।
४ ३ २ ०७ ०३c त्वामर्भस्य हविषः समानमित्त्वां महो वृणते नान्यं त्वत् ॥ ९८४

४ ३ २ ०८ ०१a पुरूरुणा चिद्ध्यस्त्यवो नूनं वां वरुण ।
४ ३ २ ०८ ०१c मित्र वँसि वाँ सुमतिम् ॥ ९८५
४ ३ २ ०८ ०२a ता वाँ सम्यगद्रुह्वाणेषमश्याम धाम च ।
४ ३ २ ०८ ०२c वयं वां मित्रा स्याम ॥ ९८६
४ ३ २ ०८ ०३a पातं नो मित्रा पायुभिरुत त्रायेथाँ सुत्रात्रा ।
४ ३ २ ०८ ०३c साह्याम दस्यूं तनूभिः ॥ ९८७

४ ३ २ ०९ ०१a उत्तिष्ठन्नोजसा सह पीत्वा शिप्रे अवेपयः ।
४ ३ २ ०९ ०१c सोममिन्द्र चमूसुतम् ॥ ९८८
४ ३ २ ०९ ०२a अनु त्वा रोदसी उभे स्पर्धमानमददेताम् ।
४ ३ २ ०९ ०२c इन्द्र यद्दस्युहाभवः ॥ ९८९
४ ३ २ ०९ ०३a वाचमष्टापदीमहं नवस्रक्तिमृतावृधम् ।
४ ३ २ ०९ ०३c इन्द्रात्परितन्वं ममे ॥ ९९०

४ ३ २ १० ०१a इन्द्राग्नी युवामिमे३ऽभि स्तोमा अनूषत ।
४ ३ २ १० ०१c पिबतँ शम्भुवा सुतम् ॥ ९९१
४ ३ २ १० ०२a या वाँ सन्ति पुरुस्पृहो नियुतो दाशुषे नरा ।
४ ३ २ १० ०२c इन्द्राग्नी ताभिरा गतम् ॥ ९९२
४ ३ २ १० ०३a ताभिरा गच्छतं नरोपेदँ सवनँ सुतम् ।
४ ३ २ १० ०३c इन्द्राग्नी सोमपीतये ॥ ९९३

४ ३ २ ११ ०१a अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् ।
४ ३ २ ११ ०१c सीदन्योनौ योनेष्वा ॥ ९९४
४ ३ २ ११ ०२a अप्सा इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
४ ३ २ ११ ०२c सोमा अर्षन्तु विष्णवे ॥ ९९५
४ ३ २ ११ ०३a इषं तोकाय नो दधदस्मभ्यँ सोम विश्वतः ।
४ ३ २ ११ ०३c आ पवस्व सहस्रिणम् ॥ ९९६

४ ३ २ १२ ०१a सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
४ ३ २ १२ ०१c अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ९९७
४ ३ २ १२ ०२a अनूपे गोमान्गोभिरक्षाः सोमो दुग्धाभिरक्षाः ।
४ ३ २ १२ ०२c समुद्रं न संवरणान्यग्मन्मन्दी मदाय तोशते ॥ ९९८

४ ३ २ १३ ०१a यत्सोम चित्रमुक्थ्यं दिव्यं पार्थिवं वसु ।
४ ३ २ १३ ०१c तन्नः पुनान आ भर ॥ ९९९
४ ३ २ १३ ०२a वृषा पुनान आयुँषि स्तनयन्नधि बर्हिषि ।
४ ३ २ १३ ०२c हरिः सन्योनिमासदः ॥ १०००
४ ३ २ १३ ०३a युवँ हि स्थः स्वःपती इन्द्रश्च सोम गोपती ।
४ ३ २ १३ ०३c ईशाना पिप्यतं धियः ॥ १००१

४ ३ २ १४ ०१a इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
४ ३ २ १४ ०१c तमिन्महत्स्वाजिषूतिमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १००२
४ ३ २ १४ ०२a असि हि वीर सेन्योऽसि भूरि परादादिः ।
४ ३ २ १४ ०२c असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ १००३
४ ३ २ १४ ०३a यदुदीरत आजयो धृष्णवे धीयते धनाम् ।
४ ३ २ १४ ०३c युङ्क्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्मां इन्द्र वसौ दधः ॥ १००

४ ३ २ १५ ०१a स्वादोरित्था विषूवतो मध्वः पिबन्ति गौर्यः ।
४ ३ २ १५ ०१c या इन्द्रेण सयावरीर्वृष्णा मदन्ति शोभसे वस्वीरनु स्वराज्यम् ॥ १००५
४ ३ २ १५ ०२a ता अस्य पृशनायुवः सोमँ श्रीणन्ति पृश्नयः ।
४ ३ २ १५ ०२c प्रिया इन्द्रस्य धेनवो वज्रँ हिन्वन्ति सायकं वस्वीरनु स्वराज्यम् ॥ १००
४ ३ २ १५ ०३a ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः ।
४ ३ २ १५ ०३c व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥ १००७

४ ३ २ १६ ०१a असाव्यँशुर्मदायाप्सु दक्षो गिरिष्ठाः ।
४ ३ २ १६ ०१c श्येनो न योनिमासदत् ॥ १००८
४ ३ २ १६ ०२a शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम् ।
४ ३ २ १६ ०२c स्वदन्ति गावः पयोभिः ॥ १००९
४ ३ २ १६ ०३a आदीमश्वं न हेतारमशूशुभन्नमृताय ।
४ ३ २ १६ ०३c मधो रसँ सधमादे ॥ १०१०

४ ३ २ १७ ०१a अभि द्युम्नं बृहद्यश इषस्पते दीदिहि देव देवयुम् ।
४ ३ २ १७ ०१c वि कोशं मध्यमं युव ॥ १०११
४ ३ २ १७ ०२a आ वच्यस्व सुदक्ष चम्वोः सुतो विशां वह्निर्न विश्पतिः ।
४ ३ २ १७ ०२c वृष्टिं दिवः पवस्व रीतिमपो जिन्वन्गविष्टये धियः ॥ १०१२

४ ३ २ १८ ०१a प्राणा शिशुर्महीनाँ हिन्वन्नृतस्य दीधितिम् ।
४ ३ २ १८ ०१c विश्वा परि प्रिया भुवदध द्विता ॥ १०१३
४ ३ २ १८ ०२a उप त्रितस्य पाष्यो३रभक्त यद्गुहा पदम् ।
४ ३ २ १८ ०२c यज्ञस्य सप्त धामभिरध प्रियम् ॥ १०१४
४ ३ २ १८ ०३a त्रीणि त्रितस्य धारया पृष्टेष्वैरयद्रयिम् ।
४ ३ २ १८ ०३c मिमीते अस्य योजना वि सुक्रतुः ॥ १०१५

४ ३ २ १९ ०१a पवस्व वाजसातये पवित्रे धारया सुतः ।
४ ३ २ १९ ०१c इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥ १०१६
४ ३ २ १९ ०२a त्वाँ रिहन्ति धीतयो हरिं पवित्रे अद्रुहः ।
४ ३ २ १९ ०२c वत्सं जातं न मातरः पवमान विधर्मणि ॥ १०१७
४ ३ २ १९ ०३a त्वं द्यां च महिव्रत पृथिवीं चाति जभ्रिषे ।
४ ३ २ १९ ०३c प्रति द्रापिममुश्चथाः पवमान महित्वना ॥ १०१८

४ ३ २ २० ०१a इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
४ ३ २ २० ०१c हन्ति रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा ॥ १०१९
४ ३ २ २० ०२a अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः ।
४ ३ २ २० ०२c इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय ॥ १०२०
४ ३ २ २० ०३a अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृश्चन् ।
४ ३ २ २० ०३c इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥ १०२१

४ ३ २ २१ ०१a आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
४ ३ २ २१ ०१c युद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषँ स्तोतृभ्य आ भर ॥ १०२२
४ ३ २ २१ ०२a आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते ।
४ ३ २ २१ ०२c सुश्चन्द्र दस्म विश्पते हव्यवाड्भ्यँ हूयत इषँ स्तोतृभ्य आ भर ॥ १०२३
४ ३ २ २१ ०३a ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि ।
४ ३ २ २१ ०३c उतो न उत्पुपूर्या उक्थेषु शवसस्पत इषँ स्तोतृभ्य आ भर ॥ १०२४

४ ३ २ २२ ०१a इन्द्राय साम गायत विप्राय बृहते बृहत् ।
४ ३ २ २२ ०१c ब्रह्माकृते विपश्चिते पनस्यवे ॥ १०२५
४ ३ २ २२ ०२a त्वमिन्द्राभिभूरसि त्वँ सूर्यमरोचयः ।
४ ३ २ २२ ०२c विश्वकर्मा विश्वदेवो महाँ असि ॥ १०२६
४ ३ २ २२ ०३a विभ्राजं ज्योतिषा त्व३रगच्छो रोचनं दिवः ।
४ ३ २ २२ ०३c देवास्त इन्द्र सख्याय येमिरे ॥ १०२७

४ ३ २ २३ ०१a असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
४ ३ २ २३ ०१c आ त्वा पृणक्त्विन्द्रियँ रजः सूर्यो न रश्मिभिः ॥ १०२८

४ ३ २ २३ ०२a आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
४ ३ २ २३ ०२c अर्वाचीनँ सु ते मनो ग्रावा कृणोतु वग्नुना ॥ १०२९
४ ३ २ २३ ०३a इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम् ।
४ ३ २ २३ ०३c ऋषीणाँ सुष्टुतीरुप यज्ञं च मानुषाणाम् ॥ १०३०

चतुर्थ प्रपाठकः । प्रथमोऽर्धः

४ ४ १ ०१ ०१a ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभूवसुः ।
४ ४ १ ०१ ०१c दधाति रत्नँ स्वधयोरपीच्यं मदिन्तमो मत्सर इन्द्रियो रसः ॥ १०३१
४ ४ १ ०१ ०२a अभिक्रन्दन्कलशं वाज्यर्षति पतिर्दिवः शतधारो विचक्षणः ।
४ ४ १ ०१ ०२c हरिर्मित्रस्य सदनेषु सीदति मर्मृजानोऽविभिः सिन्धुभिर्वृषा ॥ १०३२
४ ४ १ ०१ ०३a अग्रे सिन्धूनां पवमानो अर्षत्यग्रे वाचो अग्रियो गोषु गच्छसि ।
४ ४ १ ०१ ०३c अग्रे वाजस्य भजसे महद्धनँ स्वायुधः सोतृभिः सोम सूयसे ॥ १०३३

४ ४ १ ०२ ०१a असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।
४ ४ १ ०२ ०१c शुक्रासो वीरयाशवः ॥ १०३४
४ ४ १ ०२ ०२a शुम्भमानो ऋतायुभिर्मृज्यमाना गभस्त्योः ।
र्म् ४ ४ १ ०२ ०२c पवन्ते वारे अव्यये ॥ १०३५
४ ४ १ ०२ ०३a ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा ।
४ ४ १ ०२ ०३c पवन्तामान्तरिक्ष्या ॥ १०३६

४ ४ १ ०३ ०१a पवस्व देववीरति पवित्रँ सोम रँह्या ।
४ ४ १ ०३ ०१c इन्द्रमिन्दो वृषा विश ॥ १०३७
४ ४ १ ०३ ०२a आ वच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः ।
४ ४ १ ०३ ०२c आ योनिं धर्णसिः सदः ॥ १०३८
४ ४ १ ०३ ०३a अधुक्षत प्रियं मधु धारा सुतस्य वेधसः ।
४ ४ १ ०३ ०३c अपो वसिष्ट सुक्रतुः ॥ १०३९
४ ४ १ ०३ ०४a महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः ।
४ ४ १ ०३ ०४c यद्गोभिर्वासयिष्यसे ॥ १०४०
४ ४ १ ०३ ०५a समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः ।
४ ४ १ ०३ ०५c सोमः पवित्रे अस्मयुः ॥ १०४१
४ ४ १ ०३ ०६a अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
४ ४ १ ०३ ०६c सँ सूर्येण दिद्युते ॥ १०४२
४ ४ १ ०३ ०७a गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः ।
४ ४ १ ०३ ०७c याभिर्मदाय शुम्भसे ॥ १०४३
४ ४ १ ०३ ०८a तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे ।
४ ४ १ ०३ ०८c तव प्रशस्तये महे ॥ १०४४
४ ४ १ ०३ ०९a गोषा इन्दो नृषा अस्यश्वसा वाजसा उत ।
४ ४ १ ०३ ०९c आत्मा यज्ञस्य पूर्व्यः ॥ १०४५

४ ४ १ ०३ १०a अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया ।
४ ४ १ ०३ १०c पर्जन्यो वृष्टिमाँ इव ॥ १०४६

४ ४ १ ०४ ०१a सना च सोम जेषि च पवमान महि श्रवः ।
४ ४ १ ०४ ०१c अथा नो वस्यसस्कृधि ॥ १०४७
४ ४ १ ०४ ०२a सना ज्योतिः सना स्वा३र्विश्वा च सोम सौभगा ।
४ ४ १ ०४ ०२c अथा नो वस्यसस्कृधि ॥ १०४८
४ ४ १ ०४ ०३a सना दक्षमुत क्रतुमप सोम मृधो जहि ।
४ ४ १ ०४ ०३c अथा नो वस्यसस्कृधि ॥ १०४९
४ ४ १ ०४ ०४a पवीतारः पुनीतन सोममिन्द्राय पातवे ।
४ ४ १ ०४ ०४c अथा नो वस्यसस्कृधि ॥ १०५०
४ ४ १ ०४ ०५a त्वँ सूर्ये न आ भज तव क्रत्वा तवोतिभिः ।
४ ४ १ ०४ ०५c अथा नो वस्यसस्कृधि ॥ १०५१
४ ४ १ ०४ ०६a तव क्रत्वा तवोतिभिर्ज्योक्पश्येम सूर्यम् ।
४ ४ १ ०४ ०६c अथा नो वस्यसस्कृधि ॥ १०५२
४ ४ १ ०४ ०७a अभ्यर्ष स्वायुध सोम द्विबर्हसँ रयिम् ।
४ ४ १ ०४ ०७c अथा नो वस्यसस्कृधि ॥ १०५३
४ ४ १ ०४ ०८a अभ्या३र्षानपच्युतो वाजिन्त्समत्सु सासहिः ।
४ ४ १ ०४ ०८c अथा नो वस्यसस्कृधि ॥ १०५४
४ ४ १ ०४ ०९a त्वां यज्ञैरवीवृधन्पवमान विधर्मणि ।
४ ४ १ ०४ ०९c अथा नो वस्यसस्कृधि ॥ १०५५
४ ४ १ ०४ १०a रयिं नश्चित्रमश्विनमिन्दो विश्वायुमा भर ।
४ ४ १ ०४ १०c अथा नो वस्यसस्कृधि ॥ १०५६

४ ४ १ ०५ ०१a तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
४ ४ १ ०५ ०१c तरत्स मन्दी धावति ॥ १०५७
४ ४ १ ०५ ०२a उस्रा वेद वसूनां मर्त्तस्य देव्यवसः ।
४ ४ १ ०५ ०२c तरत्स मन्दी धावति ॥ १०५८
४ ४ १ ०५ ०३a ध्वस्रयोः पुरुषन्त्योरा सहस्राणि दद्महे ।
४ ४ १ ०५ ०३c तरत्स मन्दी धावति ॥ १०५९
४ ४ १ ०५ ०४a आ ययोस्त्रिँशतं तना सहस्राणि च दद्महे ।
४ ४ १ ०५ ०४c तरत्स मन्दी धावति ॥ १०६०

४ ४ १ ०६ ०१a एते सोमा असृक्षत गृणानाः शवसे महे ।
४ ४ १ ०६ ०१c मदिन्तमस्य धारया ॥ १०६१
४ ४ १ ०६ ०२a अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि ।
४ ४ १ ०६ ०२c सनद्वाजः परि स्रव ॥ १०६२
४ ४ १ ०६ ०३a उत नो गोमतीरिषो विश्वा अर्ष परिष्टुभः ।

४ ४ १ ०६ ०३c  गृणानो जमदग्निना ॥ १०६३

४ ४ १ ०७ ०१a  इमँ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
४ ४ १ ०७ ०१c  भद्रा हि नः प्रमतिरस्य सँसद्यग्ने सख्ये मा रिषामा वयं तव ॥ १०६४
४ ४ १ ०७ ०२a  भरामेध्मं कृणवामा हवीँषि ते चितयन्तः पर्वणापर्वणा वयम् ।
४ ४ १ ०७ ०२c  जीवातवे प्रतरँ साधया धियोऽग्ने सख्ये म रिषामा वयं तव ॥ १०६५
४ ४ १ ०७ ०३a  शकेम त्वा समिधँ साधया धियस्त्वे देवा हविरदन्त्याहुतम् ।
४ ४ १ ०७ ०३c  त्वमादित्याँ आ वह तान्ह्यू३श्मस्यग्ने सख्ये मा रिषामा वयं तव ॥ १०६

४ ४ १ ०८ ०१a  प्रति वाँ सूर उदिते मित्रं गृणीषे वरुणम् ।
४ ४ १ ०८ ०१c  अर्यमणँ रिशादसम् ॥ १०६७
४ ४ १ ०८ ०२a  राया हिरण्यया मतिरियमवृकाय शवसे ।
४ ४ १ ०८ ०२c  इयं विप्रामेधसातये ॥ १०६८
४ ४ १ ०८ ०३a  ते स्याम देव वरुण ते मित्र सूरिभिः सह ।
४ ४ १ ०८ ०३c  इषँ स्वश्च धीमहि ॥ १०६९

४ ४ १ ०९ ०१a  भिन्धि विश्वा अप द्विषः परि बाधो जही मृधः ।
४ ४ १ ०९ ०१c  वसु स्पार्हं तदा भर ॥ १०७०
४ ४ १ ०९ ०२a  यस्य ते विश्वमानुषग्भूरेर्दत्तस्य वेदति ।
४ ४ १ ०९ ०२c  वसु स्पार्हं तदा भर ॥ १०७१
४ ४ १ ०९ ०३a  यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् ।
४ ४ १ ०९ ०३c  वसु स्पार्हं तदा भर ॥ १०७२

४ ४ १ १० ०१a  यज्ञस्य हि स्थ ऋत्विजा सस्नी वाजेषु कर्मसु ।
४ ४ १ १० ०१c  इन्द्राग्नी तस्य बोधतम् ॥ १०७३
४ ४ १ १० ०२a  तोशासा रथयावाना वृत्रहणापराजिता ।
४ ४ १ १० ०२c  इन्द्राग्नी तस्य बोधतम् ॥ १०७४
४ ४ १ १० ०३a  इदं वां मदिरं मध्वधुक्षन्नद्रिभिर्नरः ।
४ ४ १ १० ०३c  इन्द्राग्नी तस्य बोधतम् ॥ १०७५

४ ४ १ ११ ०१a  इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
४ ४ १ ११ ०१c  अर्कस्य योनिमासदम् ॥ १०७६
४ ४ १ ११ ०२a  तं त्वा विप्रा वचोविदः परिष्कृण्वन्ति धर्णसिम् ।
४ ४ १ ११ ०२c  सं त्वा मृजन्त्यायवः ॥ १०७७
४ ४ १ ११ ०३a  रसं ते मित्रो अर्यमा पिबन्तु वरुणः कवे ।
४ ४ १ ११ ०३c  पवमानस्य मरुतः ॥ १०७८

४ ४ १ १२ ०१a  मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।

४ ४ १ १२ ०१c रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ १०७९
४ ४ १ १२ ०२a पुनानो वरे पवमनो अव्यये वृषो अचिक्रदद्वने ।
४ ४ १ १२ ०२c देवानाँ सोम पवमान निष्कृतं गोभिरञ्जानो अर्षसि ॥ १०८०

४ ४ १ १३ ०१a एतमु त्यं दश क्षिपो मृजन्ति सिन्धुमातरम् ।
४ ४ १ १३ ०१c समादित्येभिरख्यत ॥ १०८१
४ ४ १ १३ ०२a समिन्द्रेणोत वायुना सुत एति पवित्र आ ।
४ ४ १ १३ ०२c सँ सूर्यस्य रश्मिभिः ॥ १०८२
४ ४ १ १३ ०३a स नो भगाय वायवे पूष्णे पवस्व मधुमान् ।
४ ४ १ १३ ०३c चारुर्मित्रे वरुणे च ॥ १०८३

४ ४ १ १४ ०१a रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।
४ ४ १ १४ ०१c क्षुमन्तो याभिर्मदेम ॥ १०८४
४ ४ १ १४ ०२a आ घ त्वावां त्मना युक्तः स्तोतृभ्यो धृष्णवीयानः ।
४ ४ १ १४ ०२c ऋणोरक्षं न चक्र्योः ॥ १०८५
४ ४ १ १४ ०३a आ यद्दुवः शतक्रतवा कामं जरितॄणाम् ।
४ ४ १ १४ ०३c ऋणोरक्षं न शचीभिः ॥ १०८६

४ ४ १ १५ ०१a सुरूपकृत्नुमूतये सुदुघामिव गोदुहे ।
४ ४ १ १५ ०१c जुहूमसि द्यविद्यवि ॥ १०८७
४ ४ १ १५ ०२a उप नः सवना गहि सोमस्य सोमपाः पिब ।
४ ४ १ १५ ०२c गोदा इद्रेवतो मदः ॥ १०८८
४ ४ १ १५ ०३a अथा ते अन्तमानां विद्याम सुमतीनाम् ।
४ ४ १ १५ ०३c मा नो अति ख्य आ गहि ॥ १०८९

४ ४ १ १६ ०१a उभे यदिन्द्र रोदसी आपप्राथोषा इव ।
४ ४ १ १६ ०१c महान्तं त्वा महीनाँ सम्राजं चर्षणीनाम् ।
४ ४ १ १६ ०१e देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १०९०
४ ४ १ १६ ०२a दीर्घँ ह्यङ्कुशं यथा शक्तिं बिभर्षि मन्तुमः ।
४ ४ १ १६ ०२c पूर्वेण मघवन्पदा वयामजो यथा यमः ।
४ ४ १ १६ ०२e देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १०९१
४ ४ १ १६ ०३a अव स्म दुर्हृणायतो मर्त्तस्य तनुहि स्थिरम् ।
४ ४ १ १६ ०३c अधस्पदं तमीं कृधि यो अस्माँ अभिदासति ।
४ ४ १ १६ ०३e देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत् ॥ १०९२

४ ४ १ १७ ०१a परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् ।
४ ४ १ १७ ०१c मदेषु सर्वधा असि ॥ १०९३
४ ४ १ १७ ०२a त्वं विप्रस्त्वं कविर्मधु प्र जातमन्धसः ।

४ ४ १ १७ ०२c मदेषु सर्वधा असि ॥ १०९४
४ ४ १ १७ ०३a त्वे विश्वे सजोषसो देवासः पीतिमाशत ।
४ ४ १ १७ ०३c मदेषु सर्वधा असि ॥ १०९५

४ ४ १ १८ ०१a स सुन्वे यो वसूनां यो रायामानेता य इडानाम् ।
४ ४ १ १८ ०१c सोमो यः सुक्षितीनाम् ॥ १०९६
४ ४ १ १८ ०२a यस्य त इन्द्रः पिबाद्यस्य मरुतो यस्य वार्यमणा भगः ।
४ ४ १ १८ ०२c आ येन मित्रावरुणा करामह एन्द्रमवसे महे ॥ १०९७

४ ४ १ १९ ०१a तं वः सखायो मदाय पुनानमभि गायत ।
४ ४ १ १९ ०१c शिशुं न हव्यैः स्वदयन्त गूर्तिभिः ॥ १०९८
४ ४ १ १९ ०२a सं वत्स इव मातृभिरिन्दुर्हिन्वानो अज्यते ।
४ ४ १ १९ ०२c देवावीर्मदो मतिभिः परिष्कृतः ॥ १०९९
४ ४ १ १९ ०३a अयं दक्षाय साधनोऽयँ शर्धाय वीतये ।
४ ४ १ १९ ०३c अयं देवेभ्यो मधुमत्तरः सुतः ॥ ११००

४ ४ १ २० ०१a सोमाः पवन्त इन्दवोऽस्मभ्यं गातुवित्तमाः ।
४ ४ १ २० ०१c मित्राः सुवाना अरेपसः स्वाध्यः स्वर्विदः ॥ ११०१
४ ४ १ २० ०२a ते पूतासो विपश्चितः सोमासो दध्याशिरः ।
४ ४ १ २० ०२c सूरासो न दर्शतासो जिगत्नवो ध्रुवा घृते ॥ ११०२
४ ४ १ २० ०३a सुष्वाणासो व्यद्रिभिश्चिताना गोरधि त्वचि ।
४ ४ १ २० ०३c इषमस्मभ्यमभितः समस्वरन्वसुविदः ॥ ११०३

४ ४ १ २१ ०१a अया पवा पवस्वैना वसूनि माँश्चत्व इन्दो सरसि प्र धन्व ।
४ ४ १ २१ ०१c ब्रध्नश्चिद्यस्य वातो न जूतिं पुरुमेधाश्चित्तकवे नरं धात् ॥ ११०४
४ ४ १ २१ ०२a उत न एना पवया पवस्वाधि श्रुते श्रवाय्यस्य तीर्थे ।
४ ४ १ २१ ०२c षष्टिँ सहस्रा नैगुतो वसूनि वृक्षं न पक्वं धूनवद्रणाय ॥ ११०५
४ ४ १ २१ ०३a महीमे अस्य वृष नाम शूषे माँश्चत्वे वा पृशने वा वधत्रे ।
४ ४ १ २१ ०३c अस्वापयन्निगुतः स्नेहयच्चापामित्राँ अपाचितो अचेतः ॥ ११०६

४ ४ १ २२ ०१a अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ ११०७
४ ४ १ २२ ०२a वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥ ११०८
४ ४ १ २२ ०३a तं त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥ ११०९

४ ४ १ २३ ०१a इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ १११०
४ ४ १ २३ ०२a यज्ञं च नस्तन्वं च प्रजां चादित्यैरिन्द्रः सह सीषधातु ॥ ११११
४ ४ १ २३ ०३a आदित्यैरिन्द्रः सगणो मरुद्भिरस्मभ्यं भेषजा करत् ॥ १११२

४ ४ १ २४ ०१a प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ॥ १११३
४ ४ १ २४ ०२a अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥ १११४
४ ४ १ २४ ०३a उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥ १११५

चतुर्थ प्रपाठकः । द्वितीयोऽर्धः

४ ४ २ ०१ ०१a प्र काव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
४ ४ २ ०१ ०१c महिव्रतः शुचिबन्धुः पावकः पदा वराहो अभ्येति रेभन् ॥ १११६
४ ४ २ ०१ ०२a प्र हँसासस्तृपला वग्नुमच्छामादस्तं वृषगणा अयासुः ।
४ ४ २ ०१ ०२c आङ्गोषिणं पवमानँ सखायो दुर्मर्षं वाणं प्र वदन्ति साकम् ॥ १११७
४ ४ २ ०१ ०३a स योजत उरुगायस्य जूतिं वृथा क्रीडन्तं मिमते न गावः ।
४ ४ २ ०१ ०३c परीणसं कृणुते तिग्मश‍ृङ्गो दिवा हरिर्ददृशे नक्तमृज्रः ॥ १११८
४ ४ २ ०१ ०४a प्र स्वानासो रथा इवार्वन्तो न अवस्यवः ।
४ ४ २ ०१ ०४c सोमासो राये अक्रमुः ॥ १११९
४ ४ २ ०१ ०५a हिन्वानासो रथा इव दधन्विरे गभस्त्योः ।
४ ४ २ ०१ ०५c भरासः कारिणामिव ॥ ११२०
४ ४ २ ०१ ०६a राजानो न प्रशस्तिभिः सोमासो गोभिरञ्जते ।
४ ४ २ ०१ ०६c यज्ञो न सप्त धातृभिः ॥ ११२१
४ ४ २ ०१ ०७a परि स्वानास इन्दवो मदाय बर्हणा गिरा ।
४ ४ २ ०१ ०७c मधो अर्षन्ति धारया ॥ ११२२
४ ४ २ ०१ ०८a आपानासो विवस्वतो जिन्वन्त उषसो भगम् ।
४ ४ २ ०१ ०८c सूरा अण्वं वि तन्वते ॥ ११२३
४ ४ २ ०१ ०९a अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः ।
४ ४ २ ०१ ०९c वृष्णो हरस आयवः ॥ ११२४
४ ४ २ ०१ १०a समीचीनास आशत होतारः सप्तजानयः ।
४ ४ २ ०१ १०c पदमेकस्य पिप्रतः ॥ ११२५
४ ४ २ ०१ ११a नाभा नाभिं न आ ददे चक्षुषा सूर्यं दृशे ।
४ ४ २ ०१ ११c कवेरपत्यमा दुहे ॥ ११२६
४ ४ २ ०१ १२a अभि प्रियं दिवस्पदमध्वर्युभिर्गुहा हितम् ।
४ ४ २ ०१ १३c सूरः पस्यति चक्षसा ॥ ११२७

४ ४ २ ०२ ०१a असृग्रमिन्दवः पथा धर्मन्नृतस्य सुश्रियः ।
४ ४ २ ०२ ०१c विदाना अस्य योजना ॥ ११२८
४ ४ २ ०२ ०२a प्र धारा मधो अग्रियो महीरपो वि गाहते ।
४ ४ २ ०२ ०२c हविर्हविःषु वन्द्यः ॥ ११२९
४ ४ २ ०२ ०३a प्र युजा वाचो अग्रियो वृषो अचिक्रदद्वने ।
४ ४ २ ०२ ०३c सद्माभि सत्यो अध्वरः ॥ ११३०
४ ४ २ ०२ ०४a परि यत्काव्या कविर्नृम्णा पुनानो अर्षति ।
४ ४ २ ०२ ०४c स्वर्वाजी सिषासति ॥ ११३१

४ ४ २ ०२ ०५a पवमानो अभि स्पृधो विशो राजेव सीदति ।
४ ४ २ ०२ ०५c यदीमृण्वन्ति वेधसः ॥ ११३२
४ ४ २ ०२ ०६a अव्या वारे परि प्रियो हरिर्वनेषु सीदति ।
४ ४ २ ०२ ०६c रेभो वनुष्यते मति ॥ ११३३
४ ४ २ ०२ ०७a स वायुमिन्द्रमश्विना साकं मदेन गच्छति ।
४ ४ २ ०२ ०७c रणा यो अस्य धर्मणा ॥ ११३४
४ ४ २ ०२ ०८a आ मित्रे वरुणे भगे मधोः पवन्त ऊर्मयः ।
४ ४ २ ०२ ०८c विदाना अस्य शक्मभिः ॥ ११३५
४ ४ २ ०२ ०९a अस्मभ्यँ रोदसी रयिं मध्वो वाजस्य सातये ।
४ ४ २ ०२ ०९c श्रवो वसूनि सञ्जितम् ॥ ११३६
४ ४ २ ०२ १०a आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे ।
४ ४ २ ०२ १०c पान्तमा पुरुस्पृहम् ॥ ११३७
४ ४ २ ०२ ११a आ मन्द्रमा वरेण्यमा विप्रमा मनीषिणम् ।
४ ४ २ ०२ ११c पान्तमा पुरुस्पृहम् ॥ ११३८
४ ४ २ ०२ १२a आ रयिमा सुचेतुनमा सुक्रतो तनूष्वा ।
४ ४ २ ०२ १२c पान्तमा पुरुस्पृहम् ॥ ११३९

४ ४ २ ०३ ०१a मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
४ ४ २ ०३ ०१c कविँ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः ॥ ११४०
४ ४ २ ०३ ०२a त्वां विश्वे अमृत जायमानँ शिशुं न देवा अभि सं नवन्ते ।
४ ४ २ ०३ ०२c तव क्रतुभिरमृतत्वमायन्वैश्वानर यत्पित्रोरदीदेः ॥ ११४१
४ ४ २ ०३ ०३a नाभिं यज्ञानाँ सदनँ रयीणां महामाहावमभि सं नवन्त ।
४ ४ २ ०३ ०३c वैश्वानरँ रथ्यमध्वराणां यज्ञस्य केतुं जनयन्त देवाः ॥ ११४२

४ ४ २ ०४ ०१a प्र वो मित्राय गायत वरुणाय विपा गिरा ।
४ ४ २ ०४ ०१c महिक्षत्रावृतं बृहत् ॥ ११४३
४ ४ २ ०४ ०२a सम्राजा या घृतयोनी मित्रश्चोभा वरुणश्च ।
४ ४ २ ०४ ०२c देवा देवेषु प्रशस्ता ॥ ११४४
४ ४ २ ०४ ०३a ता नः शक्तं पर्थिवस्य महो रायो दिव्यस्य ।
४ ४ २ ०४ ०३c महि वां क्षत्रं देवेषु ॥ ११४५

४ ४ २ ०५ ०१a इन्द्रा याहि चित्रभानो सुता इमे त्वायवः ।
४ ४ २ ०५ ०१c अण्वीभिस्तना पूतासः ॥ ११४६
४ ४ २ ०५ ०२a इन्द्रा याहि धियेषितो विप्रजूतः सुतावतः ।
४ ४ २ ०५ ०२c उप ब्रह्माणि वाघतः ॥ ११४७
४ ४ २ ०५ ०३a इन्द्रा याहि तूतुजान उप ब्रह्माणि हरिवः ।
४ ४ २ ०५ ०३c सुते दधिष्व नश्चनः ॥ ११४८

४ ४ २ ०६ ०१a  तमीडिष्व यो अर्चिषा वना विश्वा परिष्वजत् ।
४ ४ २ ०६ ०१c  कृष्णा कृणोति जिह्वया ॥ ११४९
४ ४ २ ०६ ०२a  य इद्ध आविवासति सुम्नमिन्द्रस्य मर्त्यः ।
४ ४ २ ०६ ०२c  द्युम्नाय सुतरा अपः ॥ ११५०
४ ४ २ ०६ ०३a  ता नो वाजवतीरिष आशून्पिपृतमर्वतः ।
४ ४ २ ०६ ०३c  एन्द्रमग्निं च वोढवे ॥ ११५१

४ ४ २ ०७ ०१a  प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतँ सखा सख्युर्न प्र मिनाति सङ्गिरम् ।
४ ४ २ ०७ ०१c  मर्य इव युवतिभिः समर्षति सोमः कलशे शतयाम्ना पथा ॥ ११५२
४ ४ २ ०७ ०२a  प्र वो धियो मन्द्रयुवो विपन्युवः पनस्युवः संवरणेष्वक्रमुः ।
४ ४ २ ०७ ०२c  हरिं क्रीडन्तमभ्यनूषत स्तुभोऽभि धेनवः पयसेदशिश्रयुः ॥ ११५३
४ ४ २ ०७ ०३a  आ नः सोम संयतं पिप्युषीमिषमिन्दो पवस्व पवमान ऊर्मिणा ।
४ ४ २ ०७ ०३c  या नो दोहते त्रिरहन्नसश्चुषी क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥ ११५४

४ ४ २ ०८ ०१a  न किष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
४ ४ २ ०८ ०१c  इन्द्रं न यज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥ ११५५
४ ४ २ ०८ ०२a  अषाढमुग्रं पृतनासु सासहिं यस्मिन्महीरुरुज्रयः ।
४ ४ २ ०८ ०२c  सं धेनवो जायमाने अनोनवुर्द्यावः क्षामीरनोनवुः ॥ ११५६

४ ४ २ ०९ ०१a  सखाय आ नि षीदत पुनानाय प्र गायत ।
४ ४ २ ०९ ०१c  शिशुं न यज्ञैः परि भूषत श्रिये ॥ ११५७
४ ४ २ ०९ ०२a  समी वत्सं न मातृभिः सृजता गयसाधनम् ।
४ ४ २ ०९ ०२c  देवाव्याᳶ मदमभि द्विशवसम् ॥ ११५८
४ ४ २ ०९ ०३a  पुनाता दक्षसाधनं यथा शर्धाय वीतये ।
४ ४ २ ०९ ०३c  यथा मित्राय वरुणाय शन्तमम् ॥ ११५९

४ ४ २ १० ०१a  प्र वाज्यक्षाः सहस्रधारस्तिरः पवित्रं वि वारमव्यम् ॥ ११६०
४ ४ २ १० ०२a  स वाज्यक्षाः सहस्ररेता अद्भिर्मृजानो गोभिः श्रीणानः ॥ ११६१
४ ४ २ १० ०३a  प्र सोम याहीन्द्रस्य कुक्षा नृभिर्येमानो अद्रिभिः सुतः ॥ ११६२

४ ४ २ ११ ०१a  ये सोमासः परावति ये अर्वावति सुन्विरे ।
४ ४ २ ११ ०१c  ये वादः शर्यणावति ॥ ११६३
४ ४ २ ११ ०२a  य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम् ।
४ ४ २ ११ ०२c  ये वा जनेषु पञ्चसु ॥ ११६४
४ ४ २ ११ ०३a  ते नो वृष्टिं दिवस्परि पवन्तामा सुवीर्यम् ।
४ ४ २ ११ ०३c  स्वाना देवास इन्दवः ॥ ११६५

४ ४ २ १२ ०१a  आ ते वत्सो मनो यमत्परमाच्चित्सधस्थात् ।

४ ४ २ १२ ०१c  अग्ने त्वां कामये गिरा ॥ ११६६
४ ४ २ १२ ०२a  पुरुत्रा हि सदृङ्ङसि दिशो विश्वा अनु प्रभुः ।
४ ४ २ १२ ०२c  समत्सु त्वा हवामहे ॥ ११६७
४ ४ २ १२ ०३a  समत्स्वग्निमवसे वाजयन्तो हवामहे ।
४ ४ २ १२ ०३c  वाजेषु चित्रराधसम् ॥ ११६८

४ ४ २ १३ ०१a  त्वं न इन्द्रा भर ओजो नृम्णँ शतक्रतो विचर्षणे ।
४ ४ २ १३ ०१c  आ वीरं पृतनासहम् ॥ ११६९
४ ४ २ १३ ०२a  त्वँ हि नः पिता वसो त्वं माता शतक्रतो बभूविथ ।
४ ४ २ १३ ०२c  अथा ते सुम्नमीमहे ॥ ११७०
४ ४ २ १३ ०३a  त्वाँ शुष्मिन्पुरुहूत वाजयन्तमुप ब्रुवे सहस्कृत ।
४ ४ २ १३ ०३c  स नो रास्व सुवीर्यम् ॥ ११७१
४ ४ २ १३ ०४a  यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
४ ४ २ १३ ०४c  राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ११७२
४ ४ २ १३ ०५a  यन्मन्यसे वरेण्यमिन्द्र द्युक्षं तदा भर ।
४ ४ २ १३ ०५c  विद्याम तस्य ते वयमकूपारस्य दावनः ॥ ११७३
४ ४ २ १३ ०६a  यत्ते दिक्षु प्रराध्यं मनो अस्ति श्रुतं बृहत् ।
४ ४ २ १३ ०६c  तेन दृढा चिदद्रिव आ वाजं दर्षि सातये ॥ ११७४

पञ्चम प्रपाठकः । प्रथमोऽर्धः

४ ५ १ ०१ ०१a  शिशुं जज्ञानँ हर्यतं मृजन्ति शुम्भन्ति विप्रं मरुतो गणेन ।
४ ५ १ ०१ ०१c  कविर्गीर्भिः काव्येना कविः सन्त्सोमः पवित्रमत्येति रेभन् ॥ ११७५
४ ५ १ ०१ ०२a  ऋषिमना य ऋषिकृत्स्वर्षाः सहस्रनीथः पदवीः कवीनाम् ।
४ ५ १ ०१ ०२c  तृतीयं धाम महिषः सिषासन्त्सोमो विराजमनु राजति ष्टुप् ॥ ११७६
४ ५ १ ०१ ०३a  चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।
४ ५ १ ०१ ०३c  अपामूर्मिँ सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥ ११७७

४ ५ १ ०२ ०१a  एते सोमा अभि प्रियमिन्द्रस्य काममक्षरन् ।
४ ५ १ ०२ ०१c  वर्धन्तो अस्य वीर्यम् ॥ ११७८
४ ५ १ ०२ ०२a  पुनानासश्चमूषदो गच्छन्तो वायुमश्विना ।
४ ५ १ ०२ ०२c  ते नो धत्त सुवीर्यम् ॥ ११८१
४ ५ १ ०२ ०३a  इन्द्रस्य सोम राधसे पुनानो हार्दि चोदय ।
४ ५ १ ०२ ०३c  देवानां योनिमासदम् ॥ ११८०
४ ५ १ ०२ ०४a  मृजन्ति त्वा देश क्षिपो हिन्वन्ति सप्त धीतयः ।
४ ५ १ ०२ ०४c  अनु विप्रा अमादिषुः ॥ ११८१
४ ५ १ ०२ ०५a  देवेभ्यस्त्वा मदाय कँ सृजानमति मेष्यः ।
४ ५ १ ०२ ०५c  स गोभिर्वासयामसि ॥ ११८२
४ ५ १ ०२ ०६a  पुनानः कलशेष्वा वस्त्राण्यरुषो हरिः ।

४ ५ १ ०२ ०६c  परि गव्यान्यव्यत ॥ ११८३
४ ५ १ ०२ ०७a  मघोन आ पवस्व नो जहि विश्वा अप द्विषः ।
४ ५ १ ०२ ०७c  इन्दो सखायमा विश ॥ ११८४
४ ५ १ ०२ ०८a  नृचक्षसं त्वा वयमिन्द्रपीतँ स्वर्विदम् ।
४ ५ १ ०२ ०८c  भक्षीमहि प्रजामिषम् ॥ ११८५
४ ५ १ ०२ ०९a  वृष्टिं दिवः परि स्रव द्युम्नं पृथिव्या अधि ।
४ ५ १ ०२ ०९c  सहो नः सोम पृत्सु धाः ॥ ११८६

४ ५ १ ०३ ०१a  सोमः पुनानो अर्षति सहस्रधारो अत्यविः ।
४ ५ १ ०३ ०१c  वायोरिन्द्रस्य निष्कृतम् ॥ ११८७
४ ५ १ ०३ ०२a  पवमानमवस्यवो विप्रमभि प्र गायत ।
४ ५ १ ०३ ०२c  सुष्वाणं देववीतये ॥ ११८८
४ ५ १ ०३ ०३a  पवन्ते वाजसातये सोमाः सहस्रपाजसः ।
४ ५ १ ०३ ०३c  गृणाना देववीतये ॥ ११८९
४ ५ १ ०३ ०४a  उत नो वाजसातये पवस्व बृहतीरिषः ।
४ ५ १ ०३ ०४c  द्युमदिन्दो सुवीर्यम् ॥ ११९०
४ ५ १ ०३ ०५a  अत्या हियाना न हेतृभिरसृग्रं वाजसातये ।
४ ५ १ ०३ ०५c  वि वारमव्यमाशवः ॥ ११९१
४ ५ १ ०३ ०६a  ते नः सहस्रिणँ रयिं पवन्तामा सुवीर्यम् ।
४ ५ १ ०३ ०६c  सुवाना देवास इन्दवः ॥ ११९२
४ ५ १ ०३ ०७a  वाश्रा अर्षन्तीन्दवोऽभि वत्सं न मातरः ।
४ ५ १ ०३ ०७c  दधन्विरे गभस्त्योः ॥ ११९३
४ ५ १ ०३ ०८a  जुष्ट इन्द्राय मत्सरः पवमान कनिक्रदत् ।
४ ५ १ ०३ ०८c  विश्वा अप द्विषो जहि ॥ ११९४
४ ५ १ ०३ ०९a  अपघ्नन्तो अराव्णः पवमानाः स्वर्दृशः ।
४ ५ १ ०३ ०९c  योनावृतस्य सीदत ॥ ११९५

४ ५ १ ०४ ०१a  सोमा असृग्रमिन्दवः सुता ऋतस्य धारया ।
४ ५ १ ०४ ०१c  इन्द्राय मधुमत्तमाः ॥ ११९६
४ ५ १ ०४ ०२a  अभि विप्रा अनूषत गावो वत्सं न धेनवः ।
४ ५ १ ०४ ०२c  इन्द्रँ सोमस्य पीतये ॥ ११९७
४ ५ १ ०४ ०३a  मदच्युत्क्षेति सादने सिन्धोरूर्मा विपश्चित् ।
४ ५ १ ०४ ०३c  सोमो गौरी अधि श्रितः ॥ ११९८
४ ५ १ ०४ ०४a  दिवो नाभा विचक्षणोऽव्यो वारे महीयते ।
४ ५ १ ०४ ०४c  सोमो यः सुक्रतुः कविः ॥ ११९९
४ ५ १ ०४ ०५a  यः सोमः कलशेष्वा अन्तः पवित्र आहितः ।
४ ५ १ ०४ ०५c  तमिन्दुः परि षस्वजे ॥ १२००
४ ५ १ ०४ ०६a  प्र वाचमिन्दुरिष्यति समुद्रस्याधि विष्टपि ।

४ ५ १ ०४ ०६c  जिन्वन्कोशं मधुश्चुतम् ॥ १२०१
४ ५ १ ०४ ०७a  नित्यस्तोत्रो वनस्पतिर्धेनामन्तः सबर्दुघाम् ।
४ ५ १ ०४ ०७c  हिन्वानो मानुषा युजा ॥ १२०२
४ ५ १ ०४ ०८a  आ पवमान धारय रयिँ सहस्रवर्चसम् ।
४ ५ १ ०४ ०८c  अस्मे इन्दो स्वाभुवम् ॥ १२०३
४ ५ १ ०४ ०९a  अभि प्रिया दिवः कविर्विप्रः स धारया सुतः ।
४ ५ १ ०४ ०९c  सोमो हिन्वे परावति ॥ १२०४

४ ५ १ ०५ ०१a  उत्ते शुष्मास ईरते सिन्धोरूर्मेरिव स्वनः ।
४ ५ १ ०५ ०१c  वाणस्य चोदया पविम् ॥ १२०५
४ ५ १ ०५ ०२a  प्रसवे त उदीरते तिस्रो वाचो मखस्युवः ।
४ ५ १ ०५ ०२c  यदव्य एषि सानवि ॥ १२०६
४ ५ १ ०५ ०३a  अव्या वारैः परि प्रियँ हरिँ हिन्वन्त्यद्रिभिः ।
४ ५ १ ०५ ०३c  पवमानं मधुश्चुतम् ॥ १२०७
४ ५ १ ०५ ०४a  आ पवस्व मदिन्तम पवित्रं धारया कवे ।
४ ५ १ ०५ ०४c  अर्कस्य योनिमासदम् ॥ १२०८
४ ५ १ ०५ ०५a  स पवस्व मदिन्तम गोभिरञ्जानो अक्तुभिः ।
४ ५ १ ०५ ०५c  एन्द्रस्य जठरं विश ॥ १२०९

४ ५ १ ०६ ०१a  अया वीती परि स्रव यस्त इन्दो मदेष्वा ।
४ ५ १ ०६ ०१c  अवाहन्नवतीर्नव ॥ १२१०
४ ५ १ ०६ ०२a  पुरः सद्य इत्थाधिये दिवोदासाय शम्बरम् ।
४ ५ १ ०६ ०२c  अध त्यं तुर्वशं यदुम् ॥ १२१च्ल्स्दिर्
४ ५ १ ०६ ०३a  परि नो अश्वमश्वविद्गोमदिन्दो हिरण्यवत् ।
४ ५ १ ०६ ०३c  क्षरा सहस्रिणीरिषः ॥ १२१२

४ ५ १ ०७ ०१a  अपघ्नन्पवते मृधोऽप सोमो अराव्णः ।
४ ५ १ ०७ ०१c  गच्छन्निन्द्रस्य निष्कृतम् ॥ १२१३
४ ५ १ ०७ ०२a  महो नो राय आ भर पवमान जही मृधः ।
४ ५ १ ०७ ०२c  रास्वेन्दो वीरवद्यशः ॥ १२१४
४ ५ १ ०७ ०३a  न त्वा शतं च न ह्रुतो राधो दित्सन्तमा मिनन् ।
४ ५ १ ०७ ०३c  यत्पुनानो मखस्यसे ॥ १२१५

४ ५ १ ०८ ०१a  अया पवस्व धारया यया सूर्यमरोचयः ।
४ ५ १ ०८ ०१c  हिन्वानो मानुषीरपः ॥ १२१६
४ ५ १ ०८ ०२a  अयुक्त सूर एतशं पवमानो मनावधि ।
४ ५ १ ०८ ०२c  अन्तरिक्षेण यातवे ॥ १२१७
४ ५ १ ०८ ०३a  उत त्या हरितो रथे सूरो अयुक्त यातवे ।

४ ५ १ ०८ ०३c इन्दुरिन्द्र इति ब्रुवन् ॥ १२१८

४ ५ १ ०९ ०१a अग्निं वो देवमग्निभिः सजोषा यजिष्ठं दूतमध्वरे कृणुध्वम् ।
४ ५ १ ०९ ०१c यो मर्त्येषु निध्रुविर्ऋतावा तपुर्मूर्धा घृतान्नः पावकः ॥ १२१९
४ ५ १ ०९ ०२a प्रोथदश्वो न यवसेऽविष्यन्यदा महः संवरणाद्व्यस्थात् ।
४ ५ १ ०९ ०२c आदस्य वातो अनु वाति शोचिरध स्म ते व्रजनं कृष्णमस्ति ॥ १२२०
४ ५ १ ०९ ०३a उद्यस्य ते नवजातस्य वृष्णोऽग्ने चरन्त्यजरा इधानाः ।
४ ५ १ ०९ ०३c अच्छा द्यामरुषो धूम एषि सं दूतो अग्न ईयसे हि देवान् ॥ १२२१

४ ५ १ १० ०१a तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे ।
४ ५ १ १० ०१c स वृषा वृषभो भुवत् ॥ १२२२
४ ५ १ १० ०२a इन्द्रः स दामने कृत ओजिष्ठः स बले हितः ।
४ ५ १ १० ०२c द्युम्नी श्लोकी स सोम्यः ॥ १२२३
४ ५ १ १० ०३a गिरा वज्रो न सम्भृतः सबलो अनपच्युतः ।
४ ५ १ १० ०३c ववक्ष उग्रो अस्तृतः ॥ १२२४

४ ५ १ ११ ०१a अध्वर्यो अद्रिभिः सुतँ सोमं पवित्र आ नय ।
४ ५ १ ११ ०१c पुनाहीन्द्राय पातवे ॥ १२२५
४ ५ १ ११ ०२a तव त्य इन्दो अन्धसो देवा मधोर्व्याशत ।
४ ५ १ ११ ०२c पवमानस्य मरुतः ॥ १२२६
४ ५ १ ११ ०३a दिवः पीयूषमुत्तमँ सोममिन्द्राय वज्रिणे ।
४ ५ १ ११ ०३c सुनोता मधुमत्तमम् ॥ १२२७

४ ५ १ १२ ०१a धर्त्ता दिवः पवते कृत्व्यो रसो दक्षो देवानामनुमाद्यो नृभिः ।
४ ५ १ १२ ०१c हरिः सृजानो अत्यो न सत्वभिर्वृथा पाजाँसि कृणुषे नदीष्वा ॥ १२२८
४ ५ १ १२ ०२a शूरो न धत्त आयुधा गभस्त्योः स्वा३ः सिषासन्रथिरो गविष्टिषु ।
४ ५ १ १२ ०२c इन्द्रस्य शुष्ममीरयन्नपस्युभिरिन्दुर्हिन्वानो अज्यते मनीषिभिः ॥ १२२९
४ ५ १ १२ ०३a इन्द्रस्य सोम पवमान ऊर्मिणा तविष्यमाणो जठरेष्वा विश ।
४ ५ १ १२ ०३c प्र नः पिन्व विद्युदभ्रेव रोदसी धिया नो वाजाँ उप माहि शश्वतः ॥ १२३

४ ५ १ १३ ०१a यदिन्द्र प्रागपागुदङ्न्यग्वा हूयसे नृभिः ।
४ ५ १ १३ ०१c सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ १२३१
४ ५ १ १३ ०२a यद्वा रुमे रुशमे श्यावके कृप इन्द्र मादयसे सचा ।
४ ५ १ १३ ०२c कण्वासस्त्वा स्तोमेभिर्ब्रह्मवाहस इन्द्रा यच्छन्त्या गहि ॥ १२३२

४ ५ १ १४ ०१a उभयँ शृणवच्च न इन्द्रो अर्वागिदं वचः ।
४ ५ १ १४ ०१c सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥ १२३३
४ ५ १ १४ ०२a तँ हि स्वराजं वृषभं तमोजसा धिषणे निष्टतक्षतुः ।

४ ५ १ १४ ०२c उतोपमानां प्रथमो नि षीदसि सोमकामँ हि ते मनः ॥ १२३४

४ ५ १ १५ ०१a पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः ।
४ ५ १ १५ ०१c वायुमा रोह धर्मणा ॥ १२३५
४ ५ १ १५ ०२a पवमान नि तोशसे रयिँ सोम श्रवाय्यम् ।
४ ५ १ १५ ०२c इन्दो समुद्रमा विश ॥ १२३६
४ ५ १ १५ ०३a अपघ्नन्पवसे मृधः क्रतुवित्सोम मत्सरः ।
४ ५ १ १५ ०३c नुदस्वादेवयुं जनम् ॥ १२३७

४ ५ १ १६ ०१a अभी नो वाजसातमँ रयिमर्ष शतस्पृहम् ।
४ ५ १ १६ ०१c इन्दो सहस्रभर्णसं तुविद्युम्नं विभासहम् ॥ १२३८
४ ५ १ १६ ०२a वयं ते अस्य राधसो वसोर्वसो पुरुस्पृहः ।
४ ५ १ १६ ०२c नि नेदिष्ठतमा इषः स्याम सुम्ने ते आध्रिगो ॥ १२३९
४ ५ १ १६ ०३a परि स्य स्वानो अक्षरिदिन्दुरव्ये मदच्युतः ।
४ ५ १ १६ ०३c धारा य ऊर्ध्वो अध्वरे भ्राजा न याति गव्ययुः ॥ १२४०
४ ५ १ १६ ०४a पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ १२४१
४ ५ १ १६ ०५a शुक्रः पवस्व देवेभ्यः सोम दिवे पृथिव्यै शं च प्रजाभ्यः ॥ १२४२
४ ५ १ १६ ०६a दिवो धर्त्तासि शुक्रः पीयूषः सत्ये विधर्मन्वाजी पवस्व ॥ १२४३

४ ५ १ १८ ०१a प्रेष्ठं वो अतिथिँ स्तुषे मित्रमिव प्रियम् ।
४ ५ १ १८ ०१c अग्ने रथं न वेद्यम् ॥ १२४४
४ ५ १ १८ ०२a कविमिव प्रशँस्यं यं देवास इति द्विता ।
४ ५ १ १८ ०२c नि मर्त्येष्वादधुः ॥ १२४५
४ ५ १ १८ ०३a त्वं यविष्ठ दाशुषो नॄँपाहि श्रृणुही गिरः ।
४ ५ १ १८ ०३c रक्षा तोकमुत त्मना ॥ १२४६

४ ५ १ १९ ०१a एन्द्र नो गधि प्रिय सत्राजिदगोह्य ।
४ ५ १ १९ ०१c गिरिर्न विश्वतः पृथुः पतिर्दिवः ॥ १२४७
४ ५ १ १९ ०२a अभि हि सत्य सोमपा उभे बभूथ रोदसी ।
४ ५ १ १९ ०२c इन्द्रासि सुन्वतो वृधः पतिर्दिवः ॥ १२४८
४ ५ १ १९ ०३a त्वँ हि शश्वतीनामिन्द्र धर्त्ता पुरामसि ।
४ ५ १ १९ ०३c हन्ता दस्योर्मनोर्वृधः पतिर्दिवः ॥ १२४९

४ ५ १ २० ०१a पुरां भिन्दुर्युवा कविरमितौजा अजायत ।
४ ५ १ २० ०१c इन्द्रो विश्वस्य कर्मणो धर्त्ता वज्री पुरुष्टुतः ॥ १२५०
४ ५ १ २० ०२a त्वं वलस्य गोमतोऽपावरद्रिवो बिलम् ।
४ ५ १ २० ०२c त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥ १२५१
४ ५ १ २० ०३a इन्द्रमीशानमोजसाभि स्तोमैरनूषत ।

४ ५ १ २० ०३c  सहस्रं यस्य रातय उत वा सन्ति भूयसीः ॥ १२५२

पञ्चम प्रपाठकः ।  द्वितीयोऽर्धः

४ ५ २ ०१ ०१a  अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुवनस्य गोपाः ।
४ ५ २ ०१ ०१c  वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे स्वानो अद्रिः ॥ १२५३
४ ५ २ ०१ ०२a  मत्सि वायुमिष्टये राधसे च मत्सि मित्रावरुणा पूयमानः ।
४ ५ २ ०१ ०२c  मत्सि शर्धो मारुतं मत्सि देवान्मत्सि द्यावापृथिवी देव सोम ॥ १२५४
४ ५ २ ०१ ०३a  महत्तत्सोमो महिषश्चकारापां यद्गर्भोऽवृणीत देवान् ।
४ ५ २ ०१ ०३c  अदधादिन्द्रे पवमान ओजोऽजनयत्सूर्ये ज्योतिरिन्दुः ॥ १२५५

४ ५ २ ०२ ०१a  एष देवो अमर्त्यः पर्णवीरिव दीयते ।
४ ५ २ ०२ ०१c  अभि द्रोणान्यासदम् ॥ १२५६
४ ५ २ ०२ ०२a  एष विप्रैरभिष्टुतोऽपो देवो वि गाहते ।
४ ५ २ ०२ ०२c  दधद्रत्नानि दाशुषे ॥ १२५७
४ ५ २ ०२ ०३a  एष विश्वानि वार्या शूरो यन्निव सत्वभिः ।
४ ५ २ ०२ ०३c  पवमानः सिषासति ॥ १२५८
४ ५ २ ०२ ०४a  एष देवो रथर्यति पवमानो दिशस्यति ।
४ ५ २ ०२ ०४c  आविष्कृणोति वग्वनुम् ॥ १२५९
४ ५ २ ०२ ०५a  एष देवो विपन्युभिः पवमान ऋतायुभिः ।
४ ५ २ ०२ ०५c  हरिर्वाजाय मृज्यते ॥ १२६०
४ ५ २ ०२ ०६a  एष देवो विपा कृतोऽति ह्वराँसि धावति ।
४ ५ २ ०२ ०६c  पवमानो अदाभ्यः ॥ १२६१
४ ५ २ ०२ ०७a  एष दिवं वि धावति तिरो रजाँसि धारया ।
४ ५ २ ०२ ०७c  पवमानः कनिक्रदत् ॥ १२६२
४ ५ २ ०२ ०८a  एष दिवं व्यासरत्तिरो रजाँस्यस्पृतः ।
४ ५ २ ०२ ०८c  पवमानः स्वध्वरः ॥ १२६३
४ ५ २ ०२ ०९a  एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
४ ५ २ ०२ ०९c  हरिः पवित्रे अर्षति ॥ १२६४
४ ५ २ ०२ १०a  एष उ स्य पुरुव्रतो जज्ञानो जनयन्निषः ।
४ ५ २ ०२ १०c  धारया पवते सुतः ॥ १२६५

४ ५ २ ०३ ०१a  एष धिया यात्यण्व्य शूरो रथेभिराशुभिः ।
४ ५ २ ०३ ०१c  गच्छन्निन्द्रस्य निष्कृतम् ॥ १२६६
४ ५ २ ०३ ०२a  एष पुरू धियायते बृहते देवतातये ।
४ ५ २ ०३ ०२c  यत्रामृतास आशत ॥ १२६७
४ ५ २ ०३ ०३a  एतं मृजन्ति मर्ज्यमुप द्रोणेष्वायवः ।
४ ५ २ ०३ ०३c  प्रचक्राणं महीरिषः ॥ १२६८
४ ५ २ ०३ ०४a  एष हितो वि नीयतेऽन्तः शुन्ध्यावता पथा ।

४ ५ २ ०३ ०४c  यदी तुञ्जन्ति भूर्णयः ॥ १२६९
४ ५ २ ०३ ०५a  एष रुक्मिभिरीयते वाजि शुभ्रेभिरँशुभिः ।
४ ५ २ ०३ ०५c  पतिः सिन्धूनां भवन् ॥ १२७०
४ ५ २ ०३ ०६a  एष शृङ्गाणि दोधुवच्छिशीते यूथ्यो३ वृषा ।
४ ५ २ ०३ ०६c  नृम्णा दधान ओजसा ॥ १२७१
४ ५ २ ०३ ०७a  एष वसूनि पिब्दनः परुषा ययिवाँ अति ।
४ ५ २ ०३ ०७c  अव शादेषु गच्छति ॥ १२७२
४ ५ २ ०३ ०८a  एतमु त्यं दश क्षिपो हरिँ हिवन्ति यातवे ।
४ ५ २ ०३ ०८c  स्वायुधं मदिन्तमम् ॥ १२७३

४ ५ २ ०४ ०१a  एष उ स्य वृषा रथोऽव्या वारेभिरव्यत ।
४ ५ २ ०४ ०१c  गच्छन्वाजँ सहस्रिणम् ॥ १२७४
४ ५ २ ०४ ०२a  एतं त्रितस्य योषणो हरिँ हिन्वन्त्यद्रिभिः ।
४ ५ २ ०४ ०२c  इन्दुमिन्द्राय पीतये ॥ १२७५
४ ५ २ ०४ ०३a  एष स्य मानुषीष्वा श्येनो न विक्षु सीदति ।
४ ५ २ ०४ ०३c  गच्छं जारो न योषितम् ॥ १२७६
४ ५ २ ०४ ०४a  एष स्य मद्यो रसोऽव चष्टे दिवः शिशुः ।
४ ५ २ ०४ ०४c  य इन्दुर्वारमाविशत् ॥ १२७७
४ ५ २ ०४ ०५a  एष स्य पीतये सुतो हरिरर्षति धर्णसिः ।
४ ५ २ ०४ ०५c  क्रन्दन्योनिमभि प्रियम् ॥ १२७८
४ ५ २ ०४ ०६a  एतं त्यँ हरितो दश मर्मृज्यन्ते अपस्युवः ।
४ ५ २ ०४ ०६c  याभिर्मदाय शुम्भते ॥ १२७९

४ ५ २ ०५ ०१a  एष वाजी हितो नृभिर्विश्वविन्मनसस्पतिः ।
४ ५ २ ०५ ०१c  अव्यो वारं वि धावति ॥ १२८०
४ ५ २ ०५ ०२a  एष पवित्रे अक्षरत्सोमो देवेभ्यः सुतः ।
४ ५ २ ०५ ०२c  विश्वा धामान्याविशन् ॥ १२८१
४ ५ २ ०६ ०३a  एष देवः शुभायतेऽधि योनावमर्त्यः ।
४ ५ २ ०६ ०३c  वृत्रहा देववीतमः ॥ १२८२
४ ५ २ ०७ ०४a  एष वृषा कनिक्रदद्दशभिर्जामिभिर्यतः ।
४ ५ २ ०७ ०४c  अभि द्रोणानि धावति ॥ १२८३
४ ५ २ ०८ ०५a  एष सूर्यमरोचयत्पवमानो अधि द्यवि ।
४ ५ २ ०८ ०५c  पवित्रे मत्सरो मदः ॥ १२८४
४ ५ २ ०९ ०६a  एष सूर्येण हासते संवसानो विवस्वता ।
४ ५ २ ०९ ०६c  पतिर्वाचो अदाभ्यः ॥ १२८५

४ ५ २ ०६ ०१a  एष कविरभिष्टुतः पवित्रे अधि तोशते ।
४ ५ २ ०६ ०१c  पुनानो घ्नन्नप द्विषः ॥ १२८६

४ ५ २ ०६ ०२a एष इन्द्राय वायवे स्वर्जित्परि षिच्यते ।
४ ५ २ ०६ ०२c पवित्रे दक्षसाधनः ॥ १२८७
४ ५ २ ०६ ०३a एष नृभिर्वि नीयते दिवो मूर्धा वृषा सुतः ।
४ ५ २ ०६ ०३c सोमो वनेषु विश्ववित् ॥ १२८८
४ ५ २ ०६ ०४a एष गव्युरचिक्रदत्पवमानो हिरण्ययुः ।
४ ५ २ ०६ ०४c इन्दुः सत्राजिदस्तृतः ॥ १२८९
४ ५ २ ०६ ०५a एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः ।
४ ५ २ ०६ ०५c पुनान इन्दुरिन्द्रमा ॥ १२९०
४ ५ २ ०६ ०६a एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति ।
४ ५ २ ०६ ०६c देवावीरघशँसहा ॥ १२९१

४ ५ २ ०७ ०१a स सुतः पीतये वृषा सोमः पवित्रे अर्षति ।
४ ५ २ ०७ ०१c विघ्नन्रक्षाँसि देवयुः ॥ १२९२
४ ५ २ ०७ ०२a स पवित्रे विचक्षणो हरिरर्षति धर्णसिः ।
४ ५ २ ०७ ०२c अभि योनिं कनिक्रदत् ॥ १२९३
४ ५ २ ०७ ०३a स वाजी रोचना दिवः पवमानो वि धावति ।
४ ५ २ ०७ ०३c रक्षोहा वारमव्ययम् ॥ १२९४
४ ५ २ ०७ ०४a स त्रितस्याधि सानवि पवमानो अरोचयत् ।
४ ५ २ ०७ ०४c जामिभिः सूर्यँ सह ॥ १२९५
४ ५ २ ०७ ०५a स वृत्रहा वृषा सुतो वरिवोविददाभ्यः ।
४ ५ २ ०७ ०५c सोमो वाजमिवासरत् ॥ १२९६
४ ५ २ ०७ ०६a स देवः कविनेषितो३ऽभि द्रोणानि धावति ।
४ ५ २ ०७ ०६c इन्दुरिन्द्राय मँहयन् ॥ १२९७

४ ५ २ ०८ ०१a यः पावमानीरध्येत्यृषिभिः सम्भृतँ रसम् ।
४ ५ २ ०८ ०१c सर्वँ स पूतमश्नाति स्वदितं मातरिश्वना ॥ १२९८
४ ५ २ ०८ ०२a पावमानीर्यो अध्येत्यृषिभिः सम्भृतँ रसम् ।
४ ५ २ ०८ ०२c तस्मै सरस्वती दुहे क्षीरँ सर्पिर्मधूदकम् ॥ १२९९
४ ५ २ ०८ ०३a पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।
४ ५ २ ०८ ०३c ऋषिभिः सम्भृतो रसो ब्राह्मणेष्वमृतँ हितम् ॥ १३००
४ ५ २ ०८ ०४a पावमानीर्दधन्तु न इमं लोकमथो अमुम् ।
४ ५ २ ०८ ०४c कामान्त्समर्धयन्तु नो देवीर्देवैः समाहृताः ॥ १३०१
४ ५ २ ०८ ०५a येन देवाः पवित्रेणात्मानं पुनते सदा ।
४ ५ २ ०८ ०५c तेन सहस्रधारेण पावमानीः पुनन्तु नः ॥ १३०२
४ ५ २ ०८ ०६a पावमानीः स्वस्त्ययनीस्ताभिर्गच्छति नान्दनम् ।
४ ५ २ ०८ ०६c पुण्याँश्च भक्षान्भक्षयत्यमृतत्वं च गच्छति ॥ १३०३

४ ५ २ ०९ ०१a अगन्म महा नमसा यविष्ठं यो दीदाय समिद्धः स्वे दुरोणे ।

४ ५ २ ०९ ०१c  चित्रभानुँ रोदसी अन्तरुर्वी स्वाहुतं विश्वतः प्रत्यञ्चम् ॥ १३०४
४ ५ २ ०९ ०२a  स मह्ना विश्वा दुरितानि साह्वानग्नि ष्टवे दम आ जातवेदाः ।
४ ५ २ ०९ ०२c  स नो रक्षिषद्दुरितादवद्यादस्मान्गृणत उत नो मघोनः ॥ १३०५
४ ५ २ ०९ ०३a  त्वं वरुण उत मित्रो अग्ने त्वां वर्धन्ति मतिभिर्वसिष्ठाः ।
४ ५ २ ०९ ०३c  त्वे वसु सुषणनानि सन्तु यूयं पात स्वस्तिभिः सदा नः ॥ १३०६

४ ५ २ १० ०१a  महाँ इन्द्रो य ओजसा पर्जन्यो वृष्टिमाँ इव ।
४ ५ २ १० ०१c  स्तोमैर्वत्सस्य वावृधे ॥ १३०७
४ ५ २ १० ०१a  कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम् ।
४ ५ २ १० ०१c  जामि ब्रुवत आयुधा ॥ १३०८
४ ५ २ १० ०१a  प्रजामृतस्य पिप्रतः प्र यद्भरन्त वह्नयः ।
४ ५ २ १० ०१c  विप्रा ऋतस्य वाहसा ॥ १३०९

४ ५ २ ११ ०१a  पवमानस्य जिघ्नतो हरेश्चन्द्रा असृक्षत ।
४ ५ २ ११ ०१c  जीरा अजिरशोचिषः ॥ १३१०
४ ५ २ ११ ०२a  पवमानो रथीतमः शुभ्रेभिः शुभ्रशस्तमः ।
४ ५ २ ११ ०२c  हरिश्चन्द्रो मरुद्गणः ॥ १३११
४ ५ २ ११ ०३a  पवमान् व्यश्नुहि रश्मिभिर्वाजसातमः ।
४ ५ २ ११ ०३c  दधत्स्तोत्रे सुवीर्यम् ॥ १३१२

४ ५ २ १२ ०१a  परीतो षिञ्चता सुतँ सोमो य उत्तमँ हविः ।
४ ५ २ १२ ०१c  दधन्वाँ यो नर्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः ॥ १३१३
४ ५ २ १२ ०२a  नूनं पुनानोऽविभिः परि स्रवादब्धः सुरभिन्तरः ।
४ ५ २ १२ ०२c  सुते चित्वाप्सु मदामो अन्धसा श्रीणन्तो गोभिरुत्तरम् ॥ १३१४
४ ५ २ १२ ०३a  परि स्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षणः ॥ १३१५

४ ५ २ १३ ०१a  असावि सोमो अरुषो वृषा हरी राजेव दस्मो अभि गा अचिक्रदत् ।
४ ५ २ १३ ०१c  पुनानो वारमत्येष्यव्ययँ श्येनो न योनिं घृतवन्तमासदत् ॥ १३१६
४ ५ २ १३ ०२a  पर्जन्यः पिता महिषस्य पर्णिनो नाभा पृथिव्या गिरिषु क्षयं दधे ।
४ ५ २ १३ ०२c  स्वसार आपो अभि गा उदासरन्त्सं ग्रावभिर्वसते वीते अध्वरे ॥ १३१७
४ ५ २ १३ ०३a  कविर्वेधस्या पर्येषि माहिनमत्यो न मृष्टो अभि वाजमर्षसि ।
४ ५ २ १३ ०३c  अपसेधन्दुरिता सोम नो मृड घृता वसानः परि यासि निर्णिजम् ॥ १३१

४ ५ २ १४ ०१a  श्रायन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
४ ५ २ १४ ०१c  वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥ १३१९
४ ५ २ १४ ०२a  अलर्षिरातिं वसुदामुप स्तुहि भद्रा इन्द्रस्य रातयः ।
४ ५ २ १४ ०२c  यो अस्य कामं विधतो न रोषति मनो दानाय चोदयन् ॥ १३२०

४ ५ २ १५ ०१a यत इन्द्र भयामहे ततो नो अभ्यं कृधि ।
४ ५ २ १५ ०१c मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥ १३२१
४ ५ २ १५ ०२a त्वँ हि राधस्पते राधसो महः क्षयस्यासि विध्रत्ता ।
४ ५ २ १५ ०२c तं त्वा वयं मघवन्निन्द्र गिर्वणः सुतावन्तो हवामहे ॥ १३२२

४ ५ २ १६ ०१a त्वँ सोमासि धारयुर्मन्द्र ओजिष्ठो अध्वरे ।
४ ५ २ १६ ०१c पवस्व मँहयद्रयिः ॥ १३२३
४ ५ २ १६ ०२a त्वँ सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः ।
४ ५ २ १६ ०२c इन्दुः सत्राजिदस्तृतः ॥ १३२४
४ ५ २ १६ ०३a त्वँ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत् ।
४ ५ २ १६ ०३c द्युमन्तँ शुष्मा भर ॥ १३२५

४ ५ २ १७ ०१a पवस्व देववीतय इन्दो धाराभिरोजसा ।
४ ५ २ १७ ०१c आ कलशं मधुमान्त्सोम नः सदः ॥ १३२६
४ ५ २ १७ ०२a तव द्रप्सा उदप्रुत इन्द्रं मदाय वावृधुः ।
४ ५ २ १७ ०२c त्वां देवासो अमृताय कं पपुः ॥ १३२७
४ ५ २ १७ ०३a आ नः सुतास इन्दवः पुनाना धावता रयिम् ।
४ ५ २ १७ ०३c वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ १३२८

४ ५ २ १८ ०१a परि त्यँ हर्यतँ हरिं बभ्रुं पुनन्ति वारेण ।
४ ५ २ १८ ०१c यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥ १३२९
४ ५ २ १८ ०२a द्वियँ पञ्च स्वयशसँ सखायो अद्रिसँहतम् ।
४ ५ २ १८ ०२c प्रियमिन्द्रस्य काम्यं प्रस्नापयन्त ऊर्मयः ॥ १३३०
४ ५ २ १८ ०३a इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
४ ५ २ १८ ०३c नरे च दक्षिणावते वीराय सदनासदे ॥ १३३१

४ ५ २ १९ ०१a पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ १३३२
४ ५ २ १९ ०२a प्र ते सोतारो रसं मदाय पुनन्ति सोमं महे द्युम्नाय ॥ १३३३
४ ५ २ १९ ०३a शिशुं जज्ञानँ हरिं मृजन्ति पवित्रे सोमं देवेभ्य इन्दुम् ॥ १३३४

४ ५ २ २० ०१a उषो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
४ ५ २ २० ०१c इन्दुं देवा अयासिषुः ॥ १३३५
४ ५ २ २० ०२a तमिद्वर्धन्तु नो गिरो वत्सँ सँशिश्वरीरिव ।
४ ५ २ २० ०२c य इन्द्रस्य हृदँसनिः ॥ १३३६
४ ५ २ २० ०३a अर्षा नः सोम शं गवे धुक्षस्व पिप्युषीमिषम् ।
४ ५ २ २० ०३c वर्धा समुद्रमुक्थ्यम् ॥ १३३७

४ ५ २ २१ ०१a आ घा ये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक् ।

४ ५ २ २१ ०१c येषामिन्द्रो युवा सखा ॥ १३३८
४ ५ २ २१ ०२a बृहन्निदिध्म एषां भूरि शस्त्रं पृथुः स्वरुः ।
४ ५ २ २१ ०२c येषामिन्द्रो युवा सखा ॥ १३३९
४ ५ २ २१ ०३a अयुद्ध इद्युधा वृतँ शूर आजति सत्वभिः ।
४ ५ २ २१ ०३c येषामिन्द्रो युवा सखा ॥ १३४०

४ ५ २ २२ ०१a य एक इद्विदयते वसु मर्त्ताय दाशुषे ।
४ ५ २ २२ ०१c ईशानो अप्रतिष्कुत इन्द्रो अङ्ग ॥ १३४१
४ ५ २ २२ ०२a यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति ।
४ ५ २ २२ ०२c उग्रं तत्पत्यते शव इन्द्रो अङ्ग ॥ १३४२
४ ५ २ २२ ०३a कदा मर्त्तमराधसं पदा क्षुम्पमिव स्फुरत् ।
४ ५ २ २२ ०३c कदा नः शुश्रवद्गिर इन्द्रो अङ्ग ॥ १३४३

४ ५ २ २३ ०१a गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
४ ५ २ २३ ०१c ब्रह्माणस्त्वा शतक्रत उद्वँशमिव येमिरे ॥ १३४४
४ ५ २ २३ ०२a यत्सानोः सान्वारुहो भूर्यस्पष्ट कर्त्त्वम् ।
४ ५ २ २३ ०२c तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥ १३४५
४ ५ २ २३ ०३a युङ्क्षा हि केशिना हरी वृषणा कक्ष्यप्रा ।
४ ५ २ २३ ०३c अथा न इन्द्र सोमपा गिरामुपश्रुतिं चर ॥ १३४६

षष्ठ प्रपाठकः । प्रथमोऽर्धः

४ ६ १ ०१ ०१a सुषमिद्धो न आ वह देवाँ अग्ने हविष्मते ।
४ ६ १ ०१ ०१c होतः पावक यक्षि च ॥ १३४७
४ ६ १ ०१ ०२a मधुमन्तं तनूनपाद्यज्ञं देवेषु नः कवे ।
४ ६ १ ०१ ०२c अद्या कृणुह्यूतये ॥ १३४८
४ ६ १ ०१ ०३a नराशँसमिह प्रियमस्मिन्यज्ञ उप ह्वये ।
४ ६ १ ०१ ०३c मधुजिह्वँ हविष्कृतम् ॥ १३४९
४ ६ १ ०१ ०४a अग्ने सुखतमे रथे देवाँ ईडित आ वह ।
४ ६ १ ०१ ०४c असि होता मनुर्हितः ॥ १३५०

४ ६ १ ०२ ०१a यदद्य सूर उदितेऽनागा मित्रो अर्यमा ।
४ ६ १ ०२ ०१c सुवाति सविता भगः ॥ १३५१
४ ६ १ ०२ ०२a सुप्रावीरस्तु स क्षयः प्र नु यामन्त्सुदानवः ।
४ ६ १ ०२ ०२c ये नो अँहोऽतिपिप्रति ॥ १३५२
४ ६ १ ०२ ०३a उत स्वराजो अदितिरदब्धस्य व्रतस्य ये ।
४ ६ १ ०२ ०३c महो राजान ईशते ॥ १३५३

४ ६ १ ०३ ०१a उ त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः ।

४ ६ १ ०३ ०१c अव ब्रह्मद्विषो जहि ॥ १३५४
४ ६ १ ०३ ०२a पदा पणीनराधसो नि बाधस्व महाँ असि ।
४ ६ १ ०३ ०२c न हि त्वा कश्च न प्रति ॥ १३५५
४ ६ १ ०३ ०३a त्वमीशिषे सुतानामिन्द्र त्वमसुतानाम् ।
४ ६ १ ०३ ०३c त्वँ राजा जनानाम् ॥ १३५६

४ ६ १ ०४ ०१a आ जागृविर्विप्र ऋतां मतीनाँ सोमः पुनानो असदच्चमूषु ।
४ ६ १ ०४ ०१c सपन्ति यं मिथुनासो निकामा अध्वर्यवो रथिरासः सुहस्ताः ॥ १३५७
४ ६ १ ०४ ०२a स पुनान उप सूरे दधान ओबे अप्रा रोदसी वि ष आवः ।
४ ६ १ ०४ ०२c प्रिया चिद्यस्य प्रियसास ऊती सतो धनं कारिणे न प्र यँसत् ॥ १३५८
४ ६ १ ०४ ०३a स वर्धिता वर्धनः पूयमानः सोमो मीढ्वाँ अभि नो ज्योतिषावीत् ।
४ ६ १ ०४ ०३c यत्र नः पूर्वे पितरः पदज्ञाः स्वर्विदो अभि गा अद्रिमिष्णन् ॥ १३५९

४ ६ १ ०५ ०१a मा चिदन्यद्वि शँसत सखायो मा रिषण्यत ।
४ ६ १ ०५ ०१c इन्द्रमित्स्तोता वृषणँ सचा सुते मुहुरुक्था च शँसत ॥ १३६०
४ ६ १ ०५ ०२a अवक्रक्षिणं वृषभं यथा जुवं गां न चर्षणीसहम् ।
४ ६ १ ०५ ०२c विद्वेषणँ संवननमुभयङ्करं मँहिष्ठमुभयाविनम् ॥ १३६१

४ ६ १ ०६ ०१a उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
४ ६ १ ०६ ०१c सत्राजितो धनसा अक्षितोतयो वाजन्तो रथा इव ॥ १३६२
४ ६ १ ०६ ०२a कण्वा इव भृगवः सूर्या इव विश्वमिद्धीतमाशत ।
४ ६ १ ०६ ०२c इन्द्रँ स्तोमेभिर्महयन्त आयवः प्रियमेधासो अस्वरन् ॥ १३६३

४ ६ १ ०७ ०१a पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
४ ६ १ ०७ ०१c द्विषस्तरध्या ऋणया न ईरसे ॥ १३६४
४ ६ १ ०७ ०२a अजीजनो हि पवमान सूर्यं विधारे शक्मना पयः ।
४ ६ १ ०७ ०२c गोजीरया रँहमानः पुरन्ध्या ॥ १३६५
४ ६ १ ०७ ०३a अनु हि त्वा सुतँ सोम मदामसि महे समर्यराज्ये ।
४ ६ १ ०७ ०३c वाजाँ अभि पवमान प्र गाहसे ॥ १३६६

४ ६ १ ०८ ०१a परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ १३६७
४ ६ १ ०८ ०२a एवामृताय महे क्षयाय स शुक्रो अर्ष दिव्यः पीयूषः ॥ १३६८
४ ६ १ ०८ ०३a इन्द्रस्ते सोम सुतस्य पेयात्क्रत्वे दक्षाय विश्वे च देवाः ॥ १३६९

४ ६ १ ०९ ०१a सूर्यस्येव रश्मयो द्रावयित्नवो मत्सरासः प्रसुतः साकमीरते ।
४ ६ १ ०९ ०१c तन्तुं ततं परि सर्गास आशवो नेन्द्रादृते पवते धाम किं चन ॥ १३७०
४ ६ १ ०९ ०२a उपो मतिः पृच्यते सिच्यते मधु मन्द्राजनी चोदते अन्तरासनि ।
४ ६ १ ०९ ०२c पवमानः सन्तनिः सुन्वतामिव मधुमान्द्रप्सः परि वारमर्षति ॥ १३७१

४ ६ १ ०९ ०३a उक्षा मिमेति प्रति यन्ति धेनवो देवस्य देवीरुप यन्ति निष्कृतम् ।
४ ६ १ ०९ ०३c अत्यक्रमीदर्जुनं वारमव्ययमत्कं न निक्तं परि सोमो अव्यत ॥ १३७२

४ ६ १ १० ०१a अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् ।
४ ६ १ १० ०१c दूरेदृशं गृहपतिमथव्युम् ॥ १३७३
४ ६ १ १० ०२a तमग्निमस्ते वसवो न्यृण्वन्त्सुप्रतिचक्षमवसे कुतश्चित् ।
४ ६ १ १० ०२c दक्षाय्यो यो दम आस नित्यः ॥ १३७४
४ ६ १ १० ०३a प्रेद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ ।
४ ६ १ १० ०३c त्वाँ शश्वन्त उप यन्ति वाजाः ॥ १३७५

४ ६ १ ११ ०१a आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
४ ६ १ ११ ०१c पितरं च प्रयन्त्स्वः ॥ १३७६
४ ६ १ ११ ०२a अन्तश्चरति रोचनास्य प्राणादपानती ।
४ ६ १ ११ ०२c व्यख्यन्महिषो दिवम् ॥ १३७७
४ ६ १ ११ ०३a त्रिँशद्धाम वि राजति वाक्पतङ्गाय धीयते ।
४ ६ १ ११ ०३c प्रति वस्तोरह द्युभिः ॥ १३७८

षष्ठ प्रपाठकः । द्वितीयोऽर्धः

४ ६ २ ०१ ०१a उपप्रयन्तो अध्वरं मन्त्रं वोचेमाग्नये ।
४ ६ २ ०१ ०१c आरे अस्मे च शृण्वते ॥ १३७९
४ ६ २ ०१ ०२a यः स्नीहितीषु पूर्व्यः सञ्जग्मानासु कृष्टिषु ।
४ ६ २ ०१ ०२c अरक्षद्दाशुषे गयम् ॥ १३८०
४ ६ २ ०१ ०३a स नो वेदो अमात्यमग्नी रक्षतु शन्तमः ।
४ ६ २ ०१ ०३c उतास्मान्पात्वँहसः ॥ १३८१
४ ६ २ ०१ ०४a उत ब्रुवन्तु जन्तव उदग्निर्वृत्रहाजनि ।
४ ६ २ ०१ ०४c धनञ्जयो रणेरणे ॥ १३८२

४ ६ २ ०२ ०१a अग्ने युङ्क्ष्वा हि ये तवाश्वासो देव साधवः ।
४ ६ २ ०२ ०१c अरं वहन्त्याशवः ॥ १३८३
४ ६ २ ०२ ०२a अच्छा नो याह्या वहाभि प्रयाँसि वीतये ।
४ ६ २ ०२ ०२c आ देवान्त्सोमपीतये ॥ १३८४
४ ६ २ ०२ ०३a उदग्ने भारत द्युमदजस्रेण दविद्युतत् ।
४ ६ २ ०२ ०३c शोचा वि भाह्यजर ॥ १३८५

४ ६ २ ०३०१a प्र सुन्वानायान्धसो मर्त्तो न वष्ट तद्वचः ।
४ ६ २ ०३०१c अप श्वानमराधसँ हता मखं न भृगवः ॥ १३८६
४ ६ २ ०३०२a आ जामिरत्के अव्यत भुजे न पुत्र ओण्योः ।
४ ६ २ ०३०२c सरञ्जारो न योषणां वरो न योनिमासदम् ॥ १३८७

४ ६ २ ०३०३a स वीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी ।
४ ६ २ ०३०३c हरिः पवित्रे अव्यत वेधा न योनिमासदम् ॥ १३८८

४ ६ २ ०४०१a अभ्रातृव्यो अना त्वमनापिरिन्द्र जनुषा सनादसि ।
४ ६ २ ०४०१c युधेदापित्वमिच्छसे ॥ १३८९
४ ६ २ ०४०२a न की रेवन्तँ सख्याय विन्दसे पीयन्ति ते सुराश्वः ।
४ ६ २ ०४०२c यदा कृणोषि नदनुँ समूहस्यादित्पितेव हूयसे ॥ १३९०

४ ६ २ ०५०१a आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
४ ६ २ ०५०१c ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥ १३९१
४ ६ २ ०५०२a आ त्वा रथे हिरण्यये हरी मयूरशेप्या ।
४ ६ २ ०५०२c शितिपृष्ठा वहतां मध्वो अन्धसो विवक्षणस्य पीतये ॥ १३९२
४ ६ २ ०५०३a पिबा त्वा३स्य गिर्वणः सुतस्य पूर्वपा इव ।
४ ६ २ ०५०३c परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते ॥ १३९३

४ ६ २ ०६०१a आ सोता परि षिञ्चताश्वं न स्तोममप्तुरँ रजस्तुरम् ।
४ ६ २ ०६०१c वनप्रक्षमुदप्रुतम् ॥ १३९४
४ ६ २ ०६०२a सहस्रधारं वृषभं पयोदुहं प्रियं देवाय जन्मने ।
४ ६ २ ०६०२c ऋतेन य ऋतजातो विवावृधे राजा देव ऋतं बृहत् ॥ १३९५

४ ६ २ ०७०१a अग्निर्वृत्राणि जङ्घनद्द्रविणस्युर्विपन्यया ।
४ ६ २ ०७०१c समिद्धः शुक्र आहुतः ॥ १३९६
४ ६ २ ०७०२a गर्भे मातुः पितुष्पिता विदिद्युतानो अक्षरे ।
४ ६ २ ०७०२c सीदन्नृतस्य योनिमा ॥ १३९७
४ ६ २ ०७०३a ब्रह्म प्रजावदा भर जातवेदो विचर्षणे ।
४ ६ २ ०७०३c अग्ने यद्दीदयद्दिवि ॥ १३९८

४ ६ २ ०८०१a अस्य प्रेषा हेमना पूयमानो देवो देवेभिः समपृक्त रसम् ।
४ ६ २ ०८०१c सुतः पवित्रं पर्येति रेभन्मितेव सद्म पशुमन्ति होता ॥ १३९९
४ ६ २ ०८०२a भद्रा वस्त्रा समन्याऽऽ३ वसानो महान्कविर्निवचनानि शँसन् ।
४ ६ २ ०८०२c आ वच्यस्व चम्वोः पूयमानो विचक्षणो जागृविर्देववीतौ ॥ १४००
४ ६ २ ०८०३a समु प्रियो मृज्यते सानो अव्ये यशस्तरो यशसां क्षैतो अस्मे ।
४ ६ २ ०८०३c अभि स्वर धन्वा पूयमानो यूयं पात स्वस्तिभिः सदा नः ॥ १४०१

४ ६ २ ०९०१a एतो न्विन्द्रँ स्तवाम शुद्धँ शुद्धेन साम्ना ।
४ ६ २ ०९०१c शुद्धैरुक्थैर्वावृध्वाँसँ शुद्धैराशीर्वान्ममत्तु ॥ १४०२
४ ६ २ ०९०२a इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः ।
४ ६ २ ०९०२c शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्य ॥ १४०३

४ ६ २ ०९०३a इन्द्र शुद्धो हि नो रयिँ शुद्धो रत्नानि दाशुषे ।
४ ६ २ ०९०३c शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजँ सिषाससि ॥ १४०४

४ ६ २ १००१a अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः ।
४ ६ २ १००१c देवस्य द्रविणस्यवः ॥ १४०५
४ ६ २ १००२a अग्निर्जुषत नो गिरो होता यो मानुषेष्वा ।
४ ६ २ १००२c स यक्षद्दैव्यं जनम् ॥ १४०६
४ ६ २ १००३a त्वमग्ने सप्रथा असि जुष्टो होता वरेण्यः ।
४ ६ २ १००३c त्वया यज्ञं वि तन्वते ॥ १४०७

४ ६ २ ११०१a अभि त्रिपृष्ठं वृषणं वयोधामाङ्गोषिणमवावशन्त वाणीः ।
४ ६ २ ११०१c वना वसानो वरुणो न सिन्धूर्वि रत्नधा दयते वार्याणि ॥ १४०८
४ ६ २ ११०२a शूरग्रामः सर्ववीरः सहावाञ्जेता पवस्व सनिता धनानि ।
४ ६ २ ११०२c तिग्मायुधः क्षिप्रधन्वा समत्स्वषाढः साह्वान्पृतनासु शत्रून् ॥ १४०९
४ ६ २ ११०३a उरुगव्यूतिरभयानि कृण्वन्त्समीचीने आ पवस्वा पुरन्धी ।
४ ६ २ ११०३c अपः सिषासन्नुषसः स्वा३र्गाः सं चिक्रदो महो अस्मभ्यं वाजान् ॥ १४१०

४ ६ २ १२०१a त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
४ ६ २ १२०१c त्वं वृत्राणि हँस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥ १४११
४ ६ २ १२०२a तमु त्वा नूनमसुर प्रचेतसँ राधो भागमिवेमहे ।
४ ६ २ १२०२c महीव कृत्तिः शरणा त इन्द्र प्र ते सुम्ना नो अश्नवन् ॥ १४१२

४ ६ २ १३०१a यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम् ।
४ ६ २ १३०१c अस्य यज्ञस्य सुक्रतुम् ॥ १४१३
४ ६ २ १३०२a अपां नपातँ सुभगँ सुदीदितिमग्निमु श्रेष्ठशोचिषम् ।
४ ६ २ १३०२c स नो मित्रस्य वरुणस्य सो अपामा सुम्नं यक्षते दिवि ॥ १४१४

४ ६ २ १४०१a यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः ।
४ ६ २ १४०१c स यन्ता शश्वतीरिषः ॥ १४१५
४ ६ २ १४०२a न किरस्य सहन्त्य पर्येता कयस्य चित् ।
४ ६ २ १४०२c वाजो अस्ति श्रवाय्यः ॥ १४१६
४ ६ २ १४०३a स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता ।
४ ६ २ १४०३c विप्रेभिरस्तु सनिता ॥ १४१७

४ ६ २ १५०१a साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
४ ६ २ १५०१c हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ १४१८
४ ६ २ १५०२a सं मातृभिर्न शिशुर्वावशानो वृषा दधन्वे पुरुवारो अद्भिः ।
४ ६ २ १५०२c मर्यो न योषामभि निष्कृतं यन्त्सं गच्छते कलश उस्रियाभिः ॥ १४१९

४ ६ २ १५०३a उत प्र पिप्य ऊधरघ्न्याया इन्दुर्धाराभिः सचते सुमेधाः ।
४ ६ २ १५०३c मूर्धानं गावः पयसा चमूष्वभि श्रीणन्ति वसुभिर्न निक्तैः ॥ १४२०

४ ६ २ १६००a पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
४ ६ २ १६००c आपिर्नो बोधि सधमाद्ये वृधे३ऽस्माँ अवन्तु ते धियः ॥ १४२१
४ ६ २ १६००a भूयाम ते सुमतौ वाजिनो वयं मा न स्तरभिमातये ।
४ ६ २ १६००c अस्मां चित्राभिरवतादभिष्टिभिरा नः सुम्नेषु यामय ॥ १४२२

४ ६ २ १७०१a त्रिरस्मै सप्त धेनवो दुदुह्रिरे सत्यामाशिरं परमे व्योमनि ।
४ ६ २ १७०१c चत्वार्यन्या भुवनानि निर्णिजे चारूणि चक्रे यदृतैरवर्धत ॥ १४२३
४ ६ २ १७०२a स भक्षमाणो अमृतस्य चारुण उभे द्यावा काव्येना वि शश्रथे ।
४ ६ २ १७०२c तेजिष्ठा अपो मँहना परि व्यत यदी देवस्य श्रवसा सदो विदुः ॥ १४२४
४ ६ २ १७०३a ते अस्य सन्तु केतवोऽमृत्यवोऽदाभ्यासो जनुषी उभे अनु ।
४ ६ २ १७०३c येभिर्नृम्णा च देव्या च पुनत आदिद्राजानं मनना अगृभ्णत ॥ १४२५

४ ६ २ १८०१a अभि वायुं वीत्यर्षा गृणानो३ऽभि मित्रावरुणा पूयमानः ।
४ ६ २ १८०१c अभी नरं धीजवनँ रथेष्ठामभीन्द्रं वृषणं वज्रबाहुम् ॥ १४२६
४ ६ २ १८०२a अभि वस्त्रा सुवसनान्यर्षाभि धेनूः सुदुघाः पूयमानः ।
४ ६ २ १८०२c अभि चन्द्रा भर्त्तवे नो हिरण्याभ्यश्वात्रथिनो देव सोम ॥ १४२७
४ ६ २ १८०३a अभी नो अर्ष दिव्या वसून्यभि विश्वा पार्थिवा पूयमानः ।
४ ६ २ १८०३c अभि येन द्रविणमश्नवामाभ्यार्षेयं जमदग्निवन्नः ॥ १४२८

४ ६ २ १९०१a यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।
४ ६ २ १९०१c तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ १४२९
४ ६ २ १९०२a तत्ते यज्ञो अजायत तदर्क उत हस्कृतिः ।
४ ६ २ १९०२c तद्विश्वमभिभूरसि यज्जातं यच्च जन्त्वम् ॥ १४३०
४ ६ २ १९०३a आमासु पक्वमैरय आ सूर्यं रोहयो दिवि ।
४ ६ २ १९०३c घर्मं न सामं तपता सुवृक्तिभिर्जुष्टं गिर्वणसे बृहत् ॥ १४३१

४ ६ २ २००१a मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः ।
४ ६ २ २००१c वृषा ते वृष्ण इन्दुर्वाजी सहस्रसातमः ॥ १४३२
४ ६ २ २००२a आ नस्ते गन्तु मत्सरो वृषा मदो वरेण्यः ।
४ ६ २ २००२c सहावाँ इन्द्र सानसिः पृतनषाडमर्त्यः ॥ १४३३
४ ६ २ २००३a त्वँ हि शूरः सनिता चोदयो मनुषो रथम् ।
४ ६ २ २००३c सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा ॥ १४३४

षष्ठ प्रपाठकः । तृतीयोऽर्धः

४ ६ ३ ०१०१a पवस्व वृष्टिमा सु नोऽपामूर्मिं दिवस्परि ।

४ ६ ३ ०१०१c अयक्ष्मा बृहतीरिषः ॥ १४३५
४ ६ ३ ०१०२a तया पवस्व धारया यया गाव इहागमन् ।
४ ६ ३ ०१०२c जन्यास उप नो गृहम् ॥ १४३६
४ ६ ३ ०१०३a घृतं पवस्व धारया यज्ञेषु देववीतमः ।
४ ६ ३ ०१०३c अस्मभ्यं वृष्टिमा पव ॥ १४३७
४ ६ ३ ०१०४a स न ऊर्जे व्या३व्ययं पवित्रं धाव धारया ।
४ ६ ३ ०१०४c देवासः श‍ृणवन्हि कम् ॥ १४३८
४ ६ ३ ०१०५a पवमानो असिष्यदद्रक्षाँस्यपजङ्घनत् ।
४ ६ ३ ०१०५c प्रत्नवद्रोचयन्रुचः ॥ १४३९

४ ६ ३ ०२०१a प्रत्यस्मै पिपीषते विश्वानि विदुषे भर ।
४ ६ ३ ०२०१c अरङ्गमाय जग्मयेऽपश्चादध्वने नरः ॥ १४४०
४ ६ ३ ०२०२a एमेनं प्रत्येतन सोमेभिः सोमपातमम् ।
४ ६ ३ ०२०२c अमत्रेभिर्ऋजीषिणमिन्द्रँ सुतेभिरिन्दुभिः ॥ १४४१
४ ६ ३ ०२०३a यदी सुतेभिरिन्दुभिः सोमेभिः प्रतिभूषथ ।
४ ६ ३ ०२०३c वेदा विश्वस्य मेधिरो धृषत्तन्तमिदेषते ॥ १४४२
४ ६ ३ ०२०४a अस्माअस्मा इदन्धसोऽध्वर्यो प्र भरा सुतम् ।
४ ६ ३ ०२०४c कुवित्समस्य जेन्यस्य शर्धतोऽभिशस्तेरवस्वरत् ॥ १४४३

४ ६ ३ ०३०१a बभ्रवे नु स्वतवसेऽरुणाय दिविस्पृशे ।
४ ६ ३ ०३०१c सोमाय गाथमर्चत ॥ १४४४
४ ६ ३ ०३०२a हस्तच्युतेभिरद्रिभिः सुतँ सोमं पुनीतन ।
४ ६ ३ ०३०२c मधावा धावता मधु ॥ १४४५
४ ६ ३ ०३०३a नमसेदुप सीदत दध्नेदभि श्रीणीतन ।
४ ६ ३ ०३०३c इन्दुमिन्द्रे दधातन ॥ १४४६
४ ६ ३ ०३०४a अमित्रहा विचर्षणिः पवस्व सोम शं गवे ।
४ ६ ३ ०३०४c देवेभ्यो अनुकामकृत् ॥ १४४७
४ ६ ३ ०३०५a इन्द्राय सोम पातवे मदाय परि षिच्यसे ।
४ ६ ३ ०३०५c मनश्चिन्मनसस्पतिः ॥ १४४८
४ ६ ३ ०३०६a पवमान सुवीर्यँ रयिँ सोम रिरीहि नः ।
४ ६ ३ ०३०६c इन्दविन्द्रेण नो युजा ॥ १४४९

४ ६ ३ ०४०१a उद्घेदभि श्रुतामघं वृषभं नर्यापसम् ।
४ ६ ३ ०४०१c अस्तारमेषि सूर्य ॥ १४५०
४ ६ ३ ०४०२a नव यो नवतिं पुरो बिभेद बाह्वोजसा ।
४ ६ ३ ०४०२c अहिं च वृत्रहावधीत् ॥ १४५१
४ ६ ३ ०४०३a स न इन्द्रः शिवः सखाश्वावद्गोमद्यवमत् ।
४ ६ ३ ०४०३c उरुधारेव दोहते ॥ १४५२

४ ६ ३ ०५०१a विभ्राड् बृहत्पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविह्रुतम् ।
४ ६ ३ ०५०१c वातजूतो यो अभिरक्षति त्मना प्रजाः पिपर्ति बहुधा वि राजति ॥ १४५३
४ ६ ३ ०५०२a विभ्राड् बृहत्सुभृतं वाजसातमं धर्मं दिवो धरुणे सत्यमर्पितम् ।
४ ६ ३ ०५०२c अमित्रहा वृत्रहा दस्युहन्तमं ज्योतिर्जज्ञे असुरहा सपत्नहा ॥ १४५४
४ ६ ३ ०५०३a इदँ श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं विश्वजिद्धनजिदुच्यते बृहत् ।
४ ६ ३ ०५०३c विश्वभ्राड् भ्राजो महि सूर्यो दृश उरु पप्रथे सह ओजो अच्युतम् ॥ १४५

४ ६ ३ ०६०१a इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
४ ६ ३ ०६०१c शिक्षा णो अस्मिन्पुरुहूत यामनि जीव ज्योतिरशीमहि ॥ १४५६
४ ६ ३ ०६०२a मा नो अज्ञाता वृजना दुराध्योऽ माशिवासोऽव क्रमुः ।
४ ६ ३ ०६०२c त्वया वयं प्रवतः शश्वतीरपोऽति शूर तरामसि ॥ १४५७

४ ६ ३ ०७०१a अद्याद्या श्वःश्व इन्द्र त्रास्व परे च नः ।
४ ६ ३ ०७०१c विश्वा च नो जरितॄन्त्सत्पते अहा दिवा नक्तं च रक्षिषः ॥ १४५८
४ ६ ३ ०७०२a प्रभङ्गी शूरो मघवा तुवीमघः सम्मिश्लो विर्याय कम् ।
४ ६ ३ ०७०२c उभा ते बाहू वृषणा शतक्रतो नि या वज्रं मिमिक्षतुः ॥ १४५९

४ ६ ३ ०८०१a जनीयन्तो न्वग्रवः पुत्रीयन्तः सुदानवः ।
४ ६ ३ ०८०१c सरस्वन्तँ हवामहे ॥ १४६०

४ ६ ३ ०९०१a उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा ।
४ ६ ३ ०९०१c सरस्वती स्तोम्या भूत् ॥ १४६१

४ ६ ३ १००१a तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
४ ६ ३ १००१c धियो यो नः प्रचोदयात् ॥ १४६२
४ ६ ३ १००२a सोमानाँ स्वरणं कृणुहि ब्रह्मणस्पते ।
४ ६ ३ १००२a कक्षीवन्तँ य औशिजः ॥ १४६३
४ ६ ३ १००३a अग्न आयूँषि पवसे आ सुवोर्जं इषं च नः ।
४ ६ ३ १००३a आरे बाधस्व दुच्छुनाम् ॥ १४६४

४ ६ ३ ११०१a ता नः शक्तं पार्थिवस्य महो रायो दिव्यस्य ।
४ ६ ३ ११०१c महि वा क्षत्रं देवेषु ॥ १४६५
४ ६ ३ ११०२a ऋतमृतेन सपन्तेषिरं दक्षमाशाते ।
४ ६ ३ ११०२c अद्रुहा देवौ वर्धेते ॥ १४६६
४ ६ ३ ११०३a वृष्टिद्यावा रीत्यापेषस्पती दानुमत्याः ।
४ ६ ३ ११०३c बृहन्तं गर्तमाशाते ॥ १४६७

४ ६ ३ १२०१a युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः ।
४ ६ ३ १२०१c रोचन्ते रोचना दिवि ॥ १४६८
४ ६ ३ १२०२a युञ्जन्त्यस्य काम्या हरी विपक्षसा रथे ।
४ ६ ३ १२०२c शोणा धृष्णू नृवाहसा ॥ १४६९
४ ६ ३ १२०३a केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ।
४ ६ ३ १२०३c समुषद्भिरजायथाः ॥ १४७०

४ ६ ३ १३०१a अयँ सोम इन्द्र तुभ्यँ सुन्वे तुभ्यं पवते त्वमस्य पाहि ।
४ ६ ३ १३०१c त्वँ ह यं चकृषे त्वं ववृष इन्दुं मदाय युज्याय सोमम् ॥ १४७१
४ ६ ३ १३०२a स ईँ रथो न भुरिषाडयोजि महः पुरूणि सातये वसूनि ।
४ ६ ३ १३०२c आदीं विश्वा नहुष्याणि जाता स्वर्षाता वन ऊर्ध्वा नवन्त ॥ १४७२
४ ६ ३ १३०३a शुष्मी शर्धो न मारुतं पवस्वानभिशस्ता दिव्या यथा विट् ।
४ ६ ३ १३०३c आपो न मक्षू सुमतिर्भवा नः सहस्राप्साः पृतनाषाण्न यज्ञः ॥ १४७३

४ ६ ३ १४०१a त्वमग्ने यज्ञानाँ होता विश्वेषाँ हितः ।
४ ६ ३ १४०१c देवेभिर्मानुषे जने ॥ १४७४
४ ६ ३ १४०२a स नो मन्द्राभिरध्वरे जिह्वाभिर्यजा महः ।
४ ६ ३ १४०२c आ देवान्वक्षि यक्षि च ॥ १४७५
४ ६ ३ १४०३a वेत्था हि वेधो अध्वनः पथश्च देवाञ्जसा ।
४ ६ ३ १४०३c अग्ने यज्ञेषु सुक्रतो ॥ १४७६

४ ६ ३ १५०१a होता देवो अमर्त्यः पुरस्तादेति मायया ।
४ ६ ३ १५०१c विदथानि प्रचोदयन् ॥ १४७७
४ ६ ३ १५०२a वाजी वाजेषु धीयतेऽध्वरेषु प्र णीयते ।
४ ६ ३ १५०२c विप्रो यज्ञस्य साधनः ॥ १४७८
४ ६ ३ १५०३a धिया चक्रे वरेण्यो भूतानां गर्भमा दधे ।
४ ६ ३ १५०३c दक्षस्य पितरं तना ॥ १४७९

४ ६ ३ १६०१a आ सुते सिञ्चत श्रियँ रोदस्योरभिश्रियम् ।
४ ६ ३ १६०१c रसा दधीत वृषभम् ॥ १४८०
४ ६ ३ १६०२a ते जानत स्वमोक्याइँ सं वत्सासो न मातृभिः ।
४ ६ ३ १६०२c मिथो नसन्त जामिभिः ॥ १४८१
४ ६ ३ १६०३a उप स्रक्वेषु बप्सतः कृण्वते धरुणं दिवि ।
४ ६ ३ १६०३c इन्द्रे अग्ना नमः स्वः ॥ १४८२

४ ६ ३ १७०१a तदिदास भुवनेषु ज्येष्टं यतो जज्ञा उग्रस्त्वेषनृम्णः ।
४ ६ ३ १७०१c सद्यो जज्ञानो नि रिणाति शत्रूननु यं विश्वे मदन्त्यूमाः ॥ १४८३
४ ६ ३ १७०२a वावृधानः शवसा भूर्योजाः शत्रुर्दासाय भियसं दधाति ।

४ ६ ३ १७०२c अव्यनच्च व्यनच्च सस्नि सं ते नवन्त प्रभृता मदेषु ॥ १४८४
४ ६ ३ १७०३a त्वे क्रतुमपि वृञ्जन्ति विश्वे द्विर्यदेते त्रिर्भवन्त्यूमाः ।
४ ६ ३ १७०३c स्वादोः स्वादीयः स्वादुना सृजा समदः सु मधु मधुनाभि योधीः ॥ १४८५

४ ६ ३ १८०१a त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबद्विष्णुना सुतं यथाव
४ ६ ३ १८०१c स ईं ममाद महि कर्म कर्तवे महामुरुँ सैनँ सश्चद्देवो देवँ सत्य इन्दुः सत्य
४ ६ ३ १८०२a साकं जातः क्रतुना साकमोजसा ववक्षिथ साकं वृद्धो वीर्यैः सासहिर्मृधो
४ ६ ३ १८०२c दाता राध स्तुवते काम्यं वसु प्रचेतन सैनँ सश्चद्देवो देवँ सत्य इन्दुः सत्या
४ ६ ३ १८०३a अध त्विषीमाँ अभ्योजसा कृविं युधाभवदा रोदसी अपृणदस्य मज्मना प्र
४ ६ ३ १८०३c अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय सैनँ सश्चद्देवो देवँ सत्य इन्दुः सत्यमि

सप्तम प्रपाठकः । प्रथमोऽर्धः

४ ७ १ ०१०१a अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे ।
४ ७ १ ०१०१c मूनुँ सत्यस्य सत्पतिम् ॥ १४८९
४ ७ १ ०१०२a आ हरयः ससृज्रिरेऽरुषीरधि बर्हिषि ।
४ ७ १ ०१०२c यत्राभि संनवामहे ॥ १४९०
४ ७ १ ०१०३a इन्द्राय गाव आशिरं दुदुह्रे वज्रिणे मधु ।
४ ७ १ ०१०३c यत्सीमुपह्वरे विदत् ॥ १४९१

४ ७ १ ०२०१a आ नो विश्वासु हव्यमिन्द्रँ समत्सु भूषत ।
४ ७ १ ०२०१c उप ब्रह्माणि सवनानि वृत्रहन्परमज्या ऋचीषम ॥ १४९२
४ ७ १ ०२०२a त्वं दाता प्रथमो राधसामस्यसि सत्य ईशानकृत् ।
४ ७ १ ०२०२c तुविद्युम्नस्य युज्या वृणीमहे पुत्रस्य शवसो महः ॥ १४९३

४ ७ १ ०३०१a प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यं महो गाहद्दिव आ निरधुक्षत ।
४ ७ १ ०३०१c इन्द्रमभि जायमानँ समस्वरन् ॥ १४९४
४ ७ १ ०३०२a आदीं के चित्पश्यमानास आप्यं वसुरुचो दिव्या अभ्यनूषत ।
४ ७ १ ०३०२c दिवो न वारँ सविता व्यूर्णुते ॥ १४९५
४ ७ १ ०३०३a अध यदिमे पवमान रोदसी इमा च विश्वा भुवनाभि मज्मना ।
४ ७ १ ०३०३c यूथे न निष्ठा वृषभो वि राजसि ॥ १४९६

४ ७ १ ०४०१a इममू षु त्वमस्माकँ सनिं गायत्रं नव्याँसम् ।
४ ७ १ ०४०१c अग्ने देवेषु प्र वोचः ॥ १४९७
४ ७ १ ०४०२a विभक्तासि चित्रभानो सिन्धोरूर्मा उपाक आ ।
४ ७ १ ०४०२c सद्यो दाशुषे क्षरसि ॥ १४९८
४ ७ १ ०४०३a आ नो भज परमेष्वा वाजेषु मध्यमेषु ।
४ ७ १ ०४०३c शिक्षा वस्वो अन्तमस्य ॥ १४९९

४ ७ १ ०५०१a अहमिद्धि पितुष्परि मेधामृतस्य जग्रह ।
४ ७ १ ०५०१c अहँ सूर्य इवाजनि ॥ १५००
४ ७ १ ०५०२a अहं प्रत्नेन जन्मना गिरः शुम्भामि कण्ववत् ।
४ ७ १ ०५०२c येनेन्द्रः शुष्ममिद्दधे ॥ १५०१
४ ७ १ ०५०३a ये त्वामिन्द्र न तुष्टुवुर्ऋषयो ये च तुष्टुवुः ।
४ ७ १ ०५०३c ममेद्वर्धस्व सुष्टुतः ॥ १५०२

४ ७ १ ०६०१a अग्ने विश्वेभिरग्निभिर्जोषि ब्रह्म सहस्कृत ।
४ ७ १ ०६०१c ये देवत्रा य आयुषु तेभिर्नो महया गिरः ॥ १५०३
४ ७ १ ०६०२a प्र स विश्वेभिरग्निभिरग्निः स यस्य वाजिनः ।
४ ७ १ ०६०२c तनये तोके अस्मदा सम्यङ्वाजैः परीवृतः ॥ १५०४
४ ७ १ ०६०३a त्वं नो अग्ने अग्निभिर्ब्रह्म यज्ञं च वर्धय ।
४ ७ १ ०६०३c त्वं नो देवतातये रायो दानाय चोदय ॥ १५०५

४ ७ १ ०७०१a त्वे सोम प्रथमा वृक्तबर्हिषो महे वाजाय श्रवसे धियन् दधुः ।
४ ७ १ ०७०१c स त्वं नो वीर वीर्याय चोदय ॥ १५०६
४ ७ १ ०७०२a अभ्यभि हि श्रवसा ततर्दिथोत्सं न कं चिज्जनपानमक्षितम् ।
४ ७ १ ०७०२c शर्याभिर्न भरमाणो गभस्त्योः ॥ १५०७
४ ७ १ ०७०३a अजीजनो अमृत मर्त्याय अमृतस्य धर्मन्नमृतस्य चारुणः ।
४ ७ १ ०७०३c सदासरो वाजमच्छा सनिष्यदत् ॥ १५०८

४ ७ १ ०८०१a एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु ।
४ ७ १ ०८०१c प्र राधाँसि चोदयते महित्वना ॥ १५०९
४ ७ १ ०८०२a उपो हरीणां पतिँ राधः पृञ्चन्तमब्रवम् ।
४ ७ १ ०८०२c नूनँ श्रुधि स्तुवतो अश्व्यस्य ॥ १५१०
४ ७ १ ०८०३a न ह्याङ्३ग पुरा च न जज्ञे वीरतरस्त्वत् ।
४ ७ १ ०८०३c न की राया नैवथा न भन्दना ॥ १५११

४ ७ १ ०९०१a नदं व ओदतीनां नदं योयुवतीनाम् ।
४ ७ १ ०९०१c पतिं वो अघ्न्यानां धेनूनामिषुध्यसि ॥ १५१२

४ ७ १ १००१a देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
४ ७ १ १००१c उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥ १५१३
४ ७ १ १००२a तँ होतारमध्वरस्य प्रचेतसं वह्निं देवा अकृण्वत ।
४ ७ १ १००२c दधाति रत्नं विधते सुवीर्यमग्निर्जनाय दाशुषे ॥ १५१४

४ ७ १ ११०१a अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः ।
४ ७ १ ११०१c उपोषु जातमार्यस्य वर्धनमग्निं नक्षन्तु नो गिरः ॥ १५१५

४ ७ १ ११०२a यस्माद्रेजन्त कृष्टयश्चर्कृत्यानि कृण्वतः ।
४ ७ १ ११०२c सहस्रसां मेधसाताविव त्मनाग्निं धीभिर्नमस्यत ॥ १५१६
४ ७ १ ११०३a प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना ।
४ ७ १ ११०३c अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥ १५१७

४ ७ १ १२०१a अग्न आयूँषि पवसे आसुवोर्जमिषं च नः ।
४ ७ १ १२०१c आरे बाधस्व दुच्छुनाम् ॥ १५१८
४ ७ १ १२०२a अग्निर्ऋषिः पवमानः पाञ्चजन्यः पुरोहितः ।
४ ७ १ १२०२c तमीमहे महागयम् ॥ १५१९
४ ७ १ १२०३a अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम् ।
४ ७ १ १२०३c दधद्रयिं मयि योषम् ॥ १५२०

४ ७ १ १३०१a अग्ने पावक रोचिषा मन्द्रया देव जिह्वया ।
४ ७ १ १३०१c आ देवान्वक्षि यक्षि च ॥ १५२१
४ ७ १ १३०२a तं त्वा घृतस्नवीमहे चित्रभानो स्वर्दृशम् ।
४ ७ १ १३०२c देवाँ आ वीतये वह ॥ १५२२
४ ७ १ १३०३a वीतिहोत्रं त्वा कवे द्युमन्तँ समिधीमहि ।
४ ७ १ १३०३c अग्ने बृहन्तमध्वरे ॥ १५२३

४ ७ १ १४०१a अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि ।
४ ७ १ १४०१c विश्वासु धीषु वन्द्य ॥ १५२४
४ ७ १ १४०२a आ नो अग्ने रयिं भर सत्रासाहं वरेण्यम् ।
४ ७ १ १४०२c विश्वासु पृत्सु दुष्टरम् ॥ १५२५
४ ७ १ १४०३a आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसम् ।
४ ७ १ १४०३c मार्डीकं धेहि जीवसे ॥ १५२६

४ ७ १ १५०१a अग्निँ हिन्वन्तु नो धियः सप्तिमाशुमिवाजिषु ।
४ ७ १ १५०१c तेन जेष्म धनन्धनम् ॥ १५२७
४ ७ १ १५०२a यया गा आकरामहै सेनयाग्ने तवोत्या ।
४ ७ १ १५०२c तां नो हिन्व मघत्तये ॥ १५२८
४ ७ १ १५०३a आग्ने स्थूरँ रयिं भर पृथुं गोमन्तमश्विनम् ।
४ ७ १ १५०३c अङ्धि खं वर्त्तया पविम् ॥ १५२९
४ ७ १ १५०४a अग्ने नक्षत्रमजरमा सूर्यँ रोहयो दिवि ।
४ ७ १ १५०४c दधज्ज्योतिर्जनेभ्यः ॥ १५३०
४ ७ १ १५०५a अग्ने केतुर्विशामसि प्रेष्ठः श्रेष्ठ उपस्थसत् ।
४ ७ १ १५०५c बोधा स्तोत्रे वयो दधत् ॥ १५३१

४ ७ १ १६०१a अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।

४ ७ १ १६०१c अपाँ रेताँसि जिन्वति ॥ १५३२
४ ७ १ १६०२a ईशिषे वार्यस्य हि दात्रस्याग्ने स्वःपतिः ।
४ ७ १ १६०२c स्तोता स्यां तव शर्मणि ॥ १५३३
४ ७ १ १६०३a उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।
४ ७ १ १६०३c तव ज्योतीँष्यर्चयः ॥ १५३४

सप्तम प्रपाठकः । द्वितीयोऽर्धः

४ ७ २ ०१०१a कस्ते जामिर्जनानामग्ने को दाश्वध्वरः ।
४ ७ २ ०१०१c को ह कस्मिन्नसि श्रितः ॥ १५३५
४ ७ २ ०१०२a त्वं जामिर्जनानामग्ने मित्रो असि प्रियः ।
४ ७ २ ०१०२c सखा सखिभ्य ईड्यः ॥ १५३६
४ ७ २ ०१०३a यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् ।
४ ७ २ ०१०३c अग्ने यक्षि स्वं दमम् ॥ १५३७

४ ७ २ ०२०१a ईडेन्यो नमस्यस्तिरस्तमाँसि दर्शतः ।
४ ७ २ ०२०१c समग्निरिध्यते वृषा ॥ १५३८
४ ७ २ ०२०२a वृषो अग्निः समिध्यतेऽश्वो न देववाहनः ।
४ ७ २ ०२०२c तँ हविष्मन्त ईडते ॥ १५३९
४ ७ २ ०२०३a वृषणं त्वा वयं वृषन्वृषणः समिधीमहि ।
४ ७ २ ०२०३c अग्ने दीद्यतं बृहत् ॥ १५४०

४ ७ २ ०३०१a उत्ते बृहन्तो अर्चयः समिधानस्य दीदिवः ।
४ ७ २ ०३०१c अग्ने शुक्रास ईरते ॥ १५४१
४ ७ २ ०३०२a उप त्वा जुह्वो३ मम घृताचीर्यन्तु हर्यत ।
४ ७ २ ०३०२c अग्ने हव्या जुषस्व नः ॥ १५४२
४ ७ २ ०३०३a मन्द्रँ होतारमृत्विजं चित्रभानुं विभावसुम् ।
४ ७ २ ०३०३c अग्निमीडे स उ श्रवत् ॥ १५४३

४ ७ २ ०४०१a पाहि नो अग्न एकया पाह्यू३त द्वितीयया ।
४ ७ २ ०४०१c पाहि गीर्भिस्तिसृभिरूर्जाँ पते पाहि चतसृभिर्वसो ॥ १५४४
४ ७ २ ०४०२a पाहि विश्वस्माद्रक्षसो अराव्णः प्र स्म वाजेषु नोऽव ।
४ ७ २ ०४०२c त्वामिद्धि नेदिष्ठं देवतातय आपिं नक्षामहे वृधे ॥ १५४५

४ ७ २ ०५०१a इनो राजन्नरतिः समिद्धो रौद्रो दक्षाय सुषुमाँ अदर्शि ।
४ ७ २ ०५०१c चिकिद्वि भाति भासा बृहतासिक्नीमेति रुशतीमपाजन् ॥ १५४६
४ ७ २ ०५०२a कृष्णां यदेनीमभि वर्पसाभूज्जनयन्योषां बृहतः पितुर्जाम् ।
४ ७ २ ०५०२c ऊर्ध्वं भानुँ सूर्यस्य स्तभायन्दिवो वसुभिररतिर्वि भाति ॥ १५४७
४ ७ २ ०५०३a भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।

४ ७ २ ०५०३c सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्रुशद्भिर्वर्णैरभि राममस्थात् ॥ १५४८

४ ७ २ ०६०१a कया ते अग्ने अङ्गिर ऊर्जो नपादुपस्तुतिम् ।
४ ७ २ ०६०१c वराय देव मन्यवे ॥ १५४९
४ ७ २ ०६०२a दाशेम कस्य मनसा यज्ञस्य सहसो यहो ।
४ ७ २ ०६०२c कदु वोच इदं नमः ॥ १५५०
४ ७ २ ०६०३a अधा त्वँ हि नस्करो विश्वा अस्मभ्यँ सुक्षितीः ।
४ ७ २ ०६०३c वाजद्रविणसो गिरः ॥ १५५१

४ ७ २ ०७०१a अग्न आ याह्यग्निभिर्होतारं त्वा वृणीमहे ।
४ ७ २ ०७०१c आ त्वामनक्तु प्रयता हविष्मती यजिष्ठं बर्हिरासदे ॥ १५५२
४ ७ २ ०७०२a अच्छा हि त्वा सहसः सूनो अङ्गिरः स्रुचश्चरन्त्यध्वरे ।
४ ७ २ ०७०२c ऊर्जो नपातं घृतकेशमीमहेऽग्निं यज्ञेषु पूर्व्यम् ॥ १५५३

४ ७ २ ०८०१a अच्छा नः शीरशोचिषं गिरो यन्तु दर्शतम् ।
४ ७ २ ०८०१c अच्छा यज्ञासो नमसा पुरूवसुं पुरुप्रशस्तमूतये ॥ १५५४
४ ७ २ ०८०२a अग्निँ सूनुँ सहसो जातवेदसं दानाय वार्याणाम् ।
४ ७ २ ०८०२c द्विता यो भूदमृतो मर्त्येष्वा होता मन्द्रतमो विशि ॥ १५५५

४ ७ २ ०९०१a अदाभ्यः पुरएता विशामग्निर्मानुषीणाम् ।
४ ७ २ ०९०१c तूर्णी रथः सदा नवः ॥ १५५६
४ ७ २ ०९०२a अभि प्रयाँसि वाहसा दाश्वाँ अश्नोति मर्त्यः ।
४ ७ २ ०९०२c क्षयं पावकशोचिषः ॥ १५५७
४ ७ २ ०९०३a साह्वान्विश्वा अभियुजः क्रतुर्देवानाममृक्तः ।
४ ७ २ ०९०३c अग्निस्तुविश्रवस्तमः ॥ १५५८

४ ७ २ १००१a भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः ।
४ ७ २ १००१c भद्रा उत प्रशस्तयः ॥ १५५९
४ ७ २ १००२a भद्रं मनः कृणुष्व वृत्रतूर्ये येना समत्सु सासहिः ।
४ ७ २ १००२c अव स्थिरा तनुहि भूरि शर्धतां वनेमा ते अभिष्टये ॥ १५६०

४ ७ २ ११०१a अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
४ ७ २ ११०१c अस्मे देहि जातवेदो महि श्रवः ॥ १५६१
४ ७ २ ११०२a स इधानो वसुष्कविरग्निरीडेन्यो गिरा ।
४ ७ २ ११०२c रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ १५६२
४ ७ २ ११०३a क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः ।
४ ७ २ ११०३c स तिग्मजम्भ रक्षसो दह प्रति ॥ १५६३

४ ७ २ १२०१a विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
४ ७ २ १२०१c अग्निं वो दुर्यं वच स्तुषे शूषस्य मन्मभिः ॥ १५६४
४ ७ २ १२०२a यं जनासो हविष्मन्तो मित्रं न सर्पिरासुतिम् ।
४ ७ २ १२०२c प्रशँसन्ति प्रशस्तिभिः ॥ १५६५
४ ७ २ १२०३a पन्याँसं जातवेदसं यो देवतात्युद्यता ।
४ ७ २ १२०३c हव्यान्यैरयद्दिवि ॥ १५६६

४ ७ २ १३०१a समिद्धमग्निँ समिधा गिरा गृणे शुचिं पावकं पुरो अध्वरे ध्रुवम् ।
४ ७ २ १३०१c विप्रँ होतारं पुरुवारमद्रुहं कविँ सुम्नैरीमहे जातवेदसम् ॥ १५६७
४ ७ २ १३०२a त्वां दूतमग्ने अमृतं युगेयुगे हव्यवाहं दधिरे पायुमीड्यम्।
४ ७ २ १३०२c देवासश्च मर्त्तासश्च जागृविं विभुं विश्पतिं नमसा नि षेदिरे ॥ १५६८
४ ७ २ १३०३a विभूषन्नग्न उभयाँ अनु व्रता दूतो देवानाँ रजसी समीयसे ।
४ ७ २ १३०३c यत्ते धीतिँ सुमतिमावृणीमहेऽध स्मा नस्त्रिवरूथः शिवो भव ॥ १५६९

४ ७ २ १४०१a उप त्वा जामयो गिरो देदिशतीर्हविष्कृतः ।
४ ७ २ १४०१c वायोरनीके अस्थिरन् ॥ १५७०
४ ७ २ १४०२a यस्य त्रिधात्ववृतं बर्हिस्तस्थावसन्दिनम् ।
४ ७ २ १४०२c आपश्चिन्नि दधा पदम् ॥ १५७१
४ ७ २ १४०३a पदं देवस्य मीढुषोऽनाधृष्टाभिरूतिभिः ।
४ ७ २ १४०३c भद्रा सूर्य इवोपदृक् ॥ १५७२

सप्तम प्रपाठकः । तृतीयोऽर्धः

४ ७ ३ ०१०१a अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः ।
४ ७ ३ ०१०१c समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥ १५७३
४ ७ ३ ०१०२a अस्येदिन्द्रो वावृधे वृष्ण्यँ शवो मदे सुतस्य विष्णवि ।
४ ७ ३ ०१०२c अद्या तमस्य महिमानमायवोऽनु ष्टुवन्ति पूर्वथा ॥ १५७४

४ ७ ३ ०२०१a प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।
४ ७ ३ ०२०१c इन्द्राग्नी इष आ वृणे ॥ १५७५
४ ७ ३ ०२०२a इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।
४ ७ ३ ०२०२c साकमेकेन कर्मणा ॥ १५७६
४ ७ ३ ०२०३a इन्द्राग्नी अपसस्पर्युप प्र यन्ति धीतयः ।
४ ७ ३ ०२०३c ऋतस्य पथ्याऽऽ३ अनु ॥ १५७७
४ ७ ३ ०२०४a इन्द्राग्नी तविषाणी वाँ सधस्थानि प्रयाँसि च ।
४ ७ ३ ०२०४c युवोरप्तूर्यँ हितम् ॥ १५७८

४ ७ ३ ०३०१a शग्ध्यू३ षु शचीपत इन्द्र विश्वाभिरूतिभिः ।
४ ७ ३ ०३०१c भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥ १५७९

४ ७ ३ ०३०२a  पौरो अश्वस्य पुरुकृद्गवामस्युत्सो देव हिरण्ययः ।
४ ७ ३ ०३०२c  न किर्हि दानं परि मर्धिषत्वे यद्यद्यामि तदा भर ॥ १५८०

४ ७ ३ ०४०१a  त्वँ ह्येहि चेरवे विदा भगं वसुत्तये ।
४ ७ ३ ०४०१c  उद्वावृषस्व मधवन्गविष्टय उदिन्द्राश्वमिष्टये ॥ १५८१
४ ७ ३ ०४०२a  त्वं पुरू सहस्राणि शतानि च यूथा दानाय मँहसे ।
४ ७ ३ ०४०२c  आ पुरन्दरं चकृम विप्रवचस इन्द्रं गायन्तोऽवसे ॥ १५८२

४ ७ ३ ०५०१a  यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
४ ७ ३ ०५०१c  मधोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥ १५८३
४ ७ ३ ०५०२a  अश्व न गीर्भी रथ्यँ सुदानवो मर्मृज्यन्ते देवयवः ।
४ ७ ३ ०५०२c  उभे तोके तनये दस्म विस्पते पर्षि राधो मघोनाम् ॥ १५८४

४ ७ ३ ०६०१a  इमं मे वरुण श्रुधी हवमद्या च मृडय ।
४ ७ ३ ०६०१c  त्वामवस्युरा चके ॥ १५८५

४ ७ ३ ०७०१a  कया त्वं न ऊत्याभि प्र मन्दसे वृषन् ।
४ ७ ३ ०७०१c  कया स्तोतृभ्य आ भर ॥ १५८६

४ ७ ३ ०८०१a  इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
४ ७ ३ ०८०१c  इन्द्रँ समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥ १५८७
४ ७ ३ ०८०२a  इन्द्रो मह्ना रोदसी पप्रथच्छव इन्द्रः सूर्यमरोचयत् ।
४ ७ ३ ०८०२c  इन्द्रे ह विश्वा भुवनानि येमिर इन्द्रे सुवानास इन्दवः ॥ १५८८

४ ७ ३ ०९०१a  विश्वकर्मन्हविषा वावृधानः स्वयं यजस्व तन्वाइँ स्वा हि ते ।
४ ७ ३ ०९०१c  मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु ॥ १५८९

४ ७ ३ १००१a  अया रुचा हरिण्या पुनानो विश्वा द्वेषाँसि तरति सयुग्वभिः सूरो न सयुग्
४ ७ ३ १००१c  धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
४ ७ ३ १००१e  विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ १५९०
४ ७ ३ १००२a  प्राचीमनु प्रदिशं पाति चेकितत्सँ रश्मिभिर्यतते दर्शतो रथो दैव्यो दर्शतो
४ ७ ३ १००२c  अग्मन्नुक्थानि पौँस्येन्द्रं जैत्राय हर्षयत ।
४ ७ ३ १००२e  वज्रश्च यद्भवथो अनपच्युता समत्स्वनपच्युता ॥ १५९१
४ ७ ३ १००३a  त्वं ह त्यत्पणीनां विदो वसु सं मातृभिर्मर्जयसि स्व आ दम ऋतस्य धी
४ ७ ३ १००३c  परावतो न साम तद्यत्रा रणन्ति धीतयः ।
४ ७ ३ १००३e  त्रिधातुभिररुषीभिर्वयो दधे रोचमानो वयो दधे ॥ १५९२

४ ७ ३ ११०१a  उत नो गोषणिं धियमश्वसां वाजसामुत ।

४ ७ ३ ११०१c नृवत्कृणुह्यूतये ॥ १५९३

४ ७ ३ १२०१a शशमानस्य वा नरः स्वेदस्य सत्यशवसः ।
४ ७ ३ १२०१c विदा कामस्य वेनतः ॥ १५९४

४ ७ ३ १३०१a उप नः सूनवो गिरः शृण्वन्त्वमृतस्य ये ।
४ ७ ३ १३०१c सुमृडीका भवन्तु नः ॥ १५९५

४ ७ ३ १४०१a प्र वां महि द्यवी अभ्युपस्तुतिं भरामहे ।
४ ७ ३ १४०१c शुची उप प्रशस्तये ॥ १५९६
४ ७ ३ १४०२a पुनाने तन्वा मिथः स्वेन दक्षेण राजथः ।
४ ७ ३ १४०२c ऊह्याथे सनादृतम् ॥ १५९७
४ ७ ३ १४०३a मही मित्रस्य साधथस्तरन्ती पिप्रती ऋतम् ।
४ ७ ३ १४०३c परि यज्ञं नि षेदथुः ॥ १५९८

४ ७ ३ १५०१a अयमु ते समतसि कपोत इव गर्भधिम् ।
४ ७ ३ १५०१c वचस्तच्चिन्न ओहसे ॥ १५९९
४ ७ ३ १५०२a स्तोत्रँ राधानां पते गिर्वाहो वीर यस्य ते ।
४ ७ ३ १५०२c विभूतिरस्तु सूनृता ॥ १६००
४ ७ ३ १५०३a ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो ।
४ ७ ३ १५०३c समन्येषु ब्रवावहै ॥ १६०१

४ ७ ३ १६०१a गाव उप वदावटे महि यज्ञस्य रप्सुदा ।
४ ७ ३ १६०१c उभा कर्णा हिरण्यया ॥ १६०२
४ ७ ३ १६०२a अभ्यारमिदद्रयो निषिक्तं पुष्करे मधु ।
४ ७ ३ १६०२c अवटस्य विसर्जने ॥ १६०३
४ ७ ३ १६०३a सिञ्चन्ति नमसावटमुच्चाचक्रं परिज्मानम् ।
४ ७ ३ १६०३c नीचीनबारमक्षितम् ॥ १६०४

४ ७ ३ १७०१a मा भेम मा श्रमिष्मोग्रस्य सख्ये तव ।
४ ७ ३ १७०१c महत्ते वृष्णो अभिचक्ष्यं कृतं पश्येम तुर्वशं यदुम् ॥ १६०५
४ ७ ३ १७०२a सव्यामनु स्फिग्यं वावसे वृष्णा न दानो अस्य रोषति ।
४ ७ ३ १७०२c मध्वा सम्पृक्ताः सारघेण धेनवस्तूयमेहि द्रवा पिब ॥ १६०६

४ ७ ३ १८०१a इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
४ ७ ३ १८०१c पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ १६०७
४ ७ ३ १८०२a अयँ सहस्रमृषिभिः सहस्कृतः समुद्र इव पप्रथे ।
४ ७ ३ १८०२c सत्यः सो अस्य महिमा गृणे शवो यज्ञेषु विप्रराज्ये ॥ १६०८

४ ७ ३ १९०१a यस्यायं विश्व आर्यो दासः शेवधिपा अरिः ।
४ ७ ३ १९०१c तिरश्चिदर्ये रुशमे पवीरवि तुभ्येत्सो अज्यते रयिः ॥ १६०९
४ ७ ३ १९०२a तुरण्यवो मधुमन्तं घृतश्चुतं विप्रासो अर्कमानृचुः ।
४ ७ ३ १९०२c अस्मे रयिः पप्रथे वृष्ण्यं शवोऽस्मे स्वानास इन्दवः ॥ १६१०

४ ७ ३ २००१a गोमन्न इन्दो अश्ववत्सुतः सुदक्ष धनिव ।
४ ७ ३ २००१c शुचिं च वर्णमधि गोषु धार्य ॥ १६११
४ ७ ३ २००२a स नो हरीणां पत इन्दो देवप्सरस्तमः ।
४ ७ ३ २००२c सखेव सख्ये नर्यो रुचे भव ॥ १६१२
४ ७ ३ २००३a सनेमि त्वमस्मदा अदेवं कं चिदत्रिणम् ।
४ ७ ३ २००३c साह्वाँ इन्दो परि बाधो अप द्वयुम् ॥ १६१३

४ ७ ३ २१०१a अञ्जते व्यञ्जते समञ्जते क्रतुँ रिहन्ति मध्वाभ्यञ्जते ।
४ ७ ३ २१०१c सिन्धोरुऽच्छ्वासे पतयन्तमुक्षणँ हिरण्यपावाः पशुमप्सु गृभ्णते ॥ १६१४
४ ७ ३ २१०२a विपश्चिते पवमानाय गायत मही न धारात्यन्धो अर्षति ।
४ ७ ३ २१०२c अहिर्न जूर्णामति सर्पति त्वचमत्यो न क्रीडन्नसरद्वृषा हरिः ॥ १६१५
४ ७ ३ २१०३a अग्रेगो राजाप्यस्तविष्यते विमानो अह्नां भुवनेष्वर्पितः ।
४ ७ ३ २१०३c हरिर्घृतस्नुः सुदृशीको अर्णवो ज्योतीरथः पवते राय ओक्यः ॥ १६१६

आष्टम प्रपाठकः । प्रथमोऽर्धः

४ ८ १ ०१०१a विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः ।
४ ८ १ ०१०१c चनो धाः सहसा यहो ॥ १६१७
४ ८ १ ०१०२a यच्चिद्धि शश्वा तना देवन्देवं यजामहे ।
४ ८ १ ०१०२c त्वे इद्धूयते हविः ॥ १६१८
४ ८ १ ०१०३a प्रियो नो अस्तु विश्पतिर्होता मन्द्रो वरेण्यः ।
४ ८ १ ०१०३c प्रियाः स्वग्नयो वयम् ॥ १६१९

४ ८ १ ०२०१a इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।
४ ८ १ ०२०१c अस्माकमस्तु केवलः ॥ १६२०
४ ८ १ ०२०२a स नो वृषन्नमुं चरुँ सत्रादावन्नपा वृधि ।
४ ८ १ ०२०२c अस्मभ्यमप्रतिष्कुतः ॥ १६२१
४ ८ १ ०२०३a बृषा यूथेव वँसगः कृष्टीरियर्त्योजसा ।
४ ८ १ ०२०३c ईशानो अप्रतिष्कुतः ॥ १६२२

४ ८ १ ०३०१a त्वं नश्चित्र ऊत्या वसो राधाँसि चोदय ।
४ ८ १ ०३०१c अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥ १६२३
४ ८ १ ०३०२a पर्षि तोकं तनयं पर्तृभिष्ट्वमदब्धैरप्रयुत्वभिः ।

४ ८ १ ०३०२c अग्ने हेडाँसि दैव्या युयोधि नोऽदेवानि हराँसि च ॥ १६२४

४ ८ १ ०४०१a किमित्ते विष्णो परिचक्षि नाम प्र यद्ववक्षे शिपिविष्टो अस्मि ।
४ ८ १ ०४०१c मा वर्पो अस्मदप गूह एतद्यदन्यरूपः समिथे बभूथ ॥ १६२५
४ ८ १ ०४०२a प्र तत्ते अद्य शिपिविष्ट हव्यमर्यः शँसामि वयुनानि विद्वान् ।
४ ८ १ ०४०२c तं त्वा गृणामि तवसमतव्यान्क्षयन्तमस्य रजसः पराके ॥ १६२६
४ ८ १ ०४०३a वषट् ते विष्णवास आ कृणोमि तन्मे जुषस्व शिपिविष्ट हव्यम् ।
४ ८ १ ०४०३c वर्धन्तु त्वा सुष्टुतयो गिरि मे यूयं पात स्वस्तिभिः सदा नः ॥ १६२७

४ ८ १ ०५०१a वायो शुक्रो अयामि ते मध्वो अग्रं दिविष्टिषु ।
४ ८ १ ०५०१c आ याहि सोमपीतये स्पार्हो देव नियुत्वता ॥ १६२८
४ ८ १ ०५०२a इन्द्रश्च वायवेषाँ सोमानां पीतिमर्हथः ।
४ ८ १ ०५०२c युवाँ हि यन्तीन्दवो निम्नमापो न सध्र्यक् ॥ १६२९
४ ८ १ ०५०३a वायविन्द्रश्च शुष्मिणा सरथँ शवसस्पती ।
४ ८ १ ०५०३c नियुत्वन्ता न ऊतय आ यातँ सोमपीतये ॥ १६३०

४ ८ १ ०६०१a अध क्षपा परिष्कृतो वाजाँ अभि प्र गाहते ।
४ ८ १ ०६०१c यदी विवस्वतो धियो हरिँ हिन्वन्ति यातवे ॥ १६३१
४ ८ १ ०६०२a तमस्य मर्जयामसि मदो य इन्द्रपातमः ।
४ ८ १ ०६०२c यं गाव आसभिर्दधुः पुरा नूनं च सूरयः ॥ १६३२
४ ८ १ ०६०३a तं गाथया पुराण्या पुनानमभ्यनूषत ।
४ ८ १ ०६०३c उतो कृपन्त धीतयो देवानां नाम बिभ्रतीः ॥ १६३३

४ ८ १ ०७०१a अश्वं न त्वा वारवन्तं वन्दध्या अग्निं नमोभिः ।
४ ८ १ ०७०१c सम्राजन्तमध्वराणाम् ॥ १६३४
४ ८ १ ०७०२a स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः ।
४ ८ १ ०७०२c मीढ्वाँ अस्माकं बभूयात् ॥ १६३५
४ ८ १ ०७०३a स नो दूराच्चासाच्च नि मर्त्यादघायोः ।
४ ८ १ ०७०३c पाहि सदमिद्विश्वायुः ॥ १६३६

४ ८ १ ०८०१a त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
४ ८ १ ०८०१c अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥ १६३७
४ ८ १ ०८०२a अनु ते शुष्मं तुरयन्तमीयतुः क्षोणी शिशुं न मातरा ।
४ ८ १ ०८०२c विश्वास्ते स्पृधः श्नथयन्त मन्यवे वृत्रं यदिन्द्र तूर्वसि ॥ १६३८

४ ८ १ ०९०१a यज्ञ इन्द्रमवर्धयद्यद्भूमिं व्यवर्तयत् ।
४ ८ १ ०९०१c चक्राण ओपशं दिवि ॥ १६३९
४ ८ १ ०९०२a व्या३न्तरिक्षमतिरन्मदे सोमस्य रोचना ।

४ ८ १ ०९०२c इन्द्रो यदभिनद्वलम् ॥ १६४०
४ ८ १ ०९०३a उदगा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः ।
४ ८ १ ०९०३c अर्वाञ्चं नुनुदे वलम् ॥ १६४१

४ ८ १ १००१a त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् ।
४ ८ १ १००१c आ च्यावयस्यूतये ॥ १६४२
४ ८ १ १००२a युध्मँ सन्तमनर्वाणँ सोमपामनपच्युतम् ।
४ ८ १ १००२c नरमवार्यक्रतुम् ॥ १६४३
४ ८ १ १००३a शिक्षा ण इन्द्र राय आ पुरु विद्वाँ ऋचीषम ।
४ ८ १ १००३c अवा नः पार्ये धने ॥ १६४४

४ ८ १ ११०१a तव त्यदिन्द्रियं बृहत्तव दक्षमुत क्रतुम् ।
४ ८ १ ११०१c वज्रँ शिशाति धिषणा वरेण्यम् ॥ १६४५
४ ८ १ ११०२a तव द्यौरिन्द्र पौँस्यं पृथिवी वर्धति श्रवः ।
४ ८ १ ११०२c त्वामापः पर्वतासश्च हिन्विरे ॥ १६४६
४ ८ १ ११०३a त्वां विष्णुर्बृहन्क्षयो मित्रो गृणाति वरुणः ।
४ ८ १ ११०३c त्वाँ शर्धो मदत्यनु मारुतम् ॥ १६४७

४ ८ १ १२०१a नमस्ते अग्न ओजसे गृणन्ति देव कृष्टयः ।
४ ८ १ १२०१c अमैरमित्रमर्दय ॥ १६४८
४ ८ १ १२०२a कुवित्सु नो गविष्टयेऽग्ने संवेषिषो रयिम् ।
४ ८ १ १२०२c उरुकृदुरु णस्कृधि ॥ १६४९
४ ८ १ १२०३a मा नो अग्ने महाधने परा वर्ग्भारभृद्यथा ।
४ ८ १ १२०३c संवर्गँ सँ रयिं जय ॥ १६५०

४ ८ १ १३०१a समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः ।
४ ८ १ १३०१c समुद्रायेव सिन्धवः ॥ १६५१
४ ८ १ १३०२a वि चिद्वृत्रस्य दोधतः शिरो बिभेद वृष्णिना ।
४ ८ १ १३०२c वज्रेण शतपर्वणा ॥ १६५२
४ ८ १ १३०३a ओजस्तदस्य तित्विष उभे यत्समवर्त्तयत् ।
४ ८ १ १३०३c इन्द्रश्चर्मेव रोदसी ॥ १६५३

४ ८ १ १४०१a सुमन्मा वस्वी रन्ती सूनरी ॥ १६५४
४ ८ १ १४०२a सरूप वृषन्ना गहीमौ भद्रौ धुर्यावभि ।
४ ८ १ १४०२c ताविमा उप सर्पतः ॥ १६५५
४ ८ १ १४०३a नीव शीर्षाणि मृढ्वं मध्य आपस्य तिष्ठति ।
४ ८ १ १४०३c शृङ्गेभिर्दशभिर्दिशन् ॥ १६५६

आष्टम प्रपाठकः । द्वितीयोऽर्धः

४ ८ २ ०१०१a पन्यंपन्यमित्सोतार आ धावत मद्याय ।
४ ८ २ ०१०१c सोमं वीराय शूराय ॥ १६५७
४ ८ २ ०१०२a एह हरी ब्रह्मयुजा शग्मा वक्षतः सखायम् ।
४ ८ २ ०१०२c इन्द्रं गीर्भिर्गिर्वणसम् ॥ १६५८
४ ८ २ ०१०३a पाता वृत्रहा सुतमा घा गमन्नारे अस्मत् ।
४ ८ २ ०१०३c नि यमते शतमूतिः ॥ १६५९

४ ८ २ ०२०१a आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ।
४ ८ २ ०२०१c न त्वामिन्द्राति रिच्यते ॥ १६६०
४ ८ २ ०२०२a विव्यक्थ महिना वृषन्भक्षँ सोमस्य जागृवे ।
४ ८ २ ०२०२c य इन्द्र जठरेषु ते ॥ १६६१
४ ८ २ ०२०३a अरं त इन्द्र कुक्षये सोमो भवतु वृत्रहन् ।
४ ८ २ ०२०३c अरं धामभ्य इन्दवः ॥ १६६२

४ ८ २ ०३०१a जराबोध तद्विविड्ढि विशेविशे यज्ञियाय ।
४ ८ २ ०३०१c स्तोमँ रुद्राय दृशीकम् ॥ १६६३
४ ८ २ ०३०२a स नो महाँ अनिमानो धूमकेतुः पुरुश्चन्द्रः ।
४ ८ २ ०३०२c धिये वाजाय हिन्वतु ॥ १६६४
४ ८ २ ०३०३a स रेवाँ इव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
४ ८ २ ०३०३c उक्थैरग्निर्बृहद्भानुः ॥ १६६५

४ ८ २ ०४०१a तद्वो गाय सुते सचा पुरुहूताय सत्वने ।
४ ८ २ ०४०१c शं यद्गवे न शाकिने ॥ १६६६
४ ८ २ ०४०२a न घा वसुर्नि यमते दानं वाजस्य गोमतः ।
४ ८ २ ०४०२c यत्सीमुपश्रवद्गिरः ॥ १६६७
४ ८ २ ०४०३a कुवित्सस्य प्र हि व्रजं गोमन्तं दस्युहा गमत् ।
४ ८ २ ०४०३c शचीभिरप नो वरत् ॥ १६६८

४ ८ २ ०५०१a इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
४ ८ २ ०५०१c समूढमस्य पाँसुले ॥ १६६९
४ ८ २ ०५०२a त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
४ ८ २ ०५०२c अतो धर्माणि धारयन् ॥ १६७०
४ ८ २ ०५०३a विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
४ ८ २ ०५०३c इन्द्रस्य युज्यः सखा ॥ १६७१
४ ८ २ ०५०४a तद्विष्णोः परमं पदँ सदा पश्यन्ति सूरयः ।
४ ८ २ ०५०४c दिवीव चक्षुराततम् ॥ १६७२
४ ८ २ ०५०५a तद्विप्रासो विपन्युवो जागृवाँसः समिन्धते ।

४ ८ २ ०५०५c विष्णोर्यत्परमं पदम् ॥ १६७३
४ ८ २ ०५०६a अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
४ ८ २ ०५०६c पृथिव्या अधि सानवि ॥ १६७४

४ ८ २ ०६०१a मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
४ ८ २ ०६०१c आरात्ताद्व सधमादं न आ गहीह वा सन्नुप श्रुधि ॥ १६७५
४ ८ २ ०६०२a इमे हि ते ब्रह्मकृतः सुते सचा मधौ न मक्ष आसते ।
४ ८ २ ०६०२c इन्द्रे कामं जरितारो वसूयवो रथे न पादमा दधुः ॥ १६७६

४ ८ २ ०७०१a अस्तावि मन्म पूर्व्यं ब्रह्मेन्द्राय वोचत ।
४ ८ २ ०७०१c पूर्वीर्ऋतस्य बृहतीरनूषत स्तोतुर्मेधा असृक्षत ॥ १६७७
४ ८ २ ०७०२a समिन्द्रो रायो बृहतीरधूनुत सं क्षोणी समु सूर्यम् ।
४ ८ २ ०७०२c सँ शुक्रासः शुचयः सं गवाशिरः सोमा इन्द्रममन्दिषुः ॥ १६७८

४ ८ २ ०८०१a इन्द्राय सोम पातवे वृत्रघ्ने परि षिच्यसे ।
४ ८ २ ०८०२c नरे च दक्षिणावते देवाय सदनासदे ॥ १६७९
४ ८ २ ०८०२a तँ सखायः पुरूरुचं यूयं वयं च सूरयः ।
४ ८ २ ०८०२c अश्याम वाजगन्ध्यँ सनेम वाजपस्त्यम् ॥ १६८०
४ ८ २ ०८०३a परि त्यँ हर्यतँ हरिं बभ्रुं पुनन्ति वारेण ।
४ ८ २ ०८०३c यो देवान्विश्वाँ इत्परि मदेन सह गच्छति ॥ १६८१

४ ८ २ ०९०१a कस्तमिन्द्र त्वावसो मर्त्यो दधर्षति ।
४ ८ २ ०९०१c श्रद्धा इत्तेमघवन् पार्ये दिवि वाजी वाजं सिषासति ॥ १६८२
४ ८ २ ०९०२a मघोनः स्म वृत्रहत्येषु चोदय ये ददति प्रिया वसु ।
४ ८ २ ०९०२c तव प्रणीती हर्यश्व सूरिभिर्विश्वा तरेम दुरिता ॥ १६८३

४ ८ २ १००१a एदु मधोर्मदिन्तरँ सिञ्चाध्वर्यो अन्धसः ।
४ ८ २ १००१c एवा हि वीर स्तवते सदावृधः ॥ १६८४
४ ८ २ १००२a इन्द्र स्थातर्हरीणां न किष्टे पूर्व्यस्तुतिम् ।
४ ८ २ १००२c उदानँश शवसा न भन्दना ॥ १६८५
४ ८ २ १००३a तं वो वाजानां पतिमहूमहि श्रवस्यवः ।
४ ८ २ १००३c अप्रायुभिर्यज्ञेभिर्वावृधेन्यम् ॥ १६८६

४ ८ २ ११०१a तं गूर्धया स्वर्णरं देवासो देवमरतिं दधन्विरे ।
४ ८ २ ११०१c देवत्रा हव्यमूहिषे ॥ १६८७
४ ८ २ ११०२a विभूतरातिं विप्र चित्रशोचिषमग्निमीडिष्व यन्तुरम् ।
४ ८ २ ११०२c अस्य मेधस्य सोम्यस्य सोभरे प्रेमध्वराय पूर्व्यम् ॥ १६८८

४ ८ २ १२०१a आ सोम सवानो अद्रिभिस्तिरो वाराण्यव्यया ।
४ ८ २ १२०१c जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ १६८९
४ ८ २ १२०२a स मामृजे तिरो अण्वानि मेष्यो मीड्वान्त्सप्तिर्न वाजयुः ।
४ ८ २ १२०२c अनुमाद्यः पवमानो मनीषिभिः सोमो विप्रेभिर्ऋक्वभिः ॥ १६९०

४ ८ २ १३०१a वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।
४ ८ २ १३०१c तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥ १६९१
४ ८ २ १३०२a वृकश्चिदस्य वारण उरामथिरा वयुनेषु भूषति ।
४ ८ २ १३०२c सेमं न स्तोमं जुजुषाण आ गहीन्द्र प्र चित्रया धिया ॥ १६९२

४ ८ २ १४०१a इन्द्राग्नी रोचना दिवः परि वाजेषु भूषथः ।
४ ८ २ १४०१c तद्वां चेति प्र वीर्यम् ॥ १६९३
४ ८ २ १४०२a इन्द्राग्नी अपसस्परि उप प्र यन्ति धीतयः ।
४ ८ २ १४०२c ऋतस्य पथ्या अनु ॥ १६९४
४ ८ २ १४०३a इन्द्राग्नी तविषाणि वाम् सधस्थानि प्रयाँसि च ।
४ ८ २ १४०३c युवोरसूर्यं हितम् ॥ १६९५

४ ८ २ १५०१a क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।
४ ८ २ १५०१c अयं यः पुरो विभिनत्त्योजसा मन्दानः शिप्रयन्धसः ॥ १६९६
४ ८ २ १५०२a दाना मृगो न वारणः पुरुत्रा चरथं दधे ।
४ ८ २ १५०२c न किष्ट्वा नि यमदा सुते गमो महाँश्चरस्योजसा ॥ १६९७
४ ८ २ १५०३a य उग्रः सन्ननिष्टृतः स्थिरो रणाय सँस्कृतः ।
४ ८ २ १५०३c यदि स्तोतुर्मघवा शृणवद्धवं नेन्द्रो योषत्या गमत् ॥ १६९८

४ ८ २ १६०१a पवमाना असृक्षत सोमाः शुक्रास इन्दवः ।
४ ८ २ १६०१c अभि विश्वानि काव्या ॥ १६९९
४ ८ २ १६०२a पवमाना दिवस्पर्यन्तरिक्षादसृक्षत ।
४ ८ २ १६०२c पृथिव्या अधि सानवि ॥ १७००
४ ८ २ १६०३a पवमानास आशवः शुभ्रा असृग्रमिन्दवः ।
४ ८ २ १६०३c घ्नन्तो विश्वा अप द्विषः ॥ १७०१

४ ८ २ १७०१a तोशा वृत्रहणा हुवे सजित्वानापराजिता ।
४ ८ २ १७०१c इन्द्राग्नी वाजसातमा ॥ १७०२
४ ८ २ १७०२a प्र वामर्चन्त्युक्थिनो नीथाविदो जरितारः ।
४ ८ २ १७०२c इन्द्राग्नी इष आ वृणे ॥ १७०३
४ ८ २ १७०३a इन्द्राग्नी नवतिं पुरो दासपत्नीरधूनुतम् ।
४ ८ २ १७०३c साकमेकेन कर्मणा ॥ १७०४

४ ८ २ १८०१a उप त्वा रण्वसन्दृशं प्रयस्वन्तः सहस्कृत ।
४ ८ २ १८०१c अग्ने ससृज्महे गिरः ॥ १७०५
४ ८ २ १८०२a उप च्छायामिव घृणेरगन्म शर्म ते वयम् ।
४ ८ २ १८०२c अग्ने हिरण्यसन्दृशः ॥ १७०६
४ ८ २ १८०३a य उग्र इव शर्यहा तिग्मशृङ्गो न वँसगः ।
४ ८ २ १८०३c अग्ने पुरो रुरोजिथ ॥ १७०७

४ ८ २ १९०१a ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ।
४ ८ २ १९०१c अजस्रं घर्ममीमहे ॥ १७०८
४ ८ २ १९०२a य इदं प्रतिपप्रथे यज्ञस्य स्वरुत्तिरन् ।
४ ८ २ १९०२c ऋतूनुत्सृजते वशी ॥ १७०९
४ ८ २ १९०३a अग्निः प्रियेषु धामसु कामो भूतस्य भव्यस्य ।
४ ८ २ १९०३c सम्राडेको वि राजति ॥ १७१०

आष्टम प्रपाठकः । तृतीयोऽर्धः

४ ८ ३ ०१०१a अग्निः प्रत्नेन जन्मना शुम्भानस्तन्वाइँ स्वाम् ।
४ ८ ३ ०१०१c कविर्विप्रेण वावृधे ॥ १७११
४ ८ ३ ०१०२a ऊर्ज्जो नपातमा हुवेऽग्निं पावकशोचिषम् ।
४ ८ ३ ०१०२c अस्मिन्यज्ञे स्वध्वरे ॥ १७१२
४ ८ ३ ०१०३a स नो मित्रमहस्त्वमग्ने शुक्रेण शोचिषा ।
४ ८ ३ ०१०३c देवैरा सत्सि बर्हिषि ॥ १७१३

४ ८ ३ ०२०१a उत्ते शुष्मासो अस्थू रक्षो भिन्दन्तो अद्रिवः ।
४ ८ ३ ०२०१c नुदस्व याः परिस्पृधः ॥ १७१४
४ ८ ३ ०२०२a अया निजघ्निरोजसा रथसङ्गे धने हिते ।
४ ८ ३ ०२०२c स्तवा अबिभ्युषा हृदा ॥ १७१५
४ ८ ३ ०२०३a अस्य व्रतानि नाधृषे पवमानस्य दूढ्या ।
४ ८ ३ ०२०३c रुज यस्त्वा पृतन्यति ॥ १७१६
४ ८ ३ ०२०४a तँ हिन्वन्ति मदच्युतँ हरिं नदीषु वाजिनम् ।
४ ८ ३ ०२०४c इन्दुमिन्द्राय मत्सरम् ॥ १७१७

४ ८ ३ ०३०१a आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः ।
४ ८ ३ ०३०१c मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ताँ इहि ॥ १७१८
४ ८ ३ ०३०२a वृत्रखादो वलँ रुजः पुरां दर्मो अपामजः ।
४ ८ ३ ०३०२c स्थाता रथस्य हर्योरभिस्वर इन्द्रो दृढा चिदारुजः ॥ १७१९
४ ८ ३ ०३०३a गम्भीराँ उदधीँरिव क्रतुं पुष्यसि गा इव ।
४ ८ ३ ०३०३c प्र सुगोपा यवसं धेनवो यथा ह्रदं कुल्या इवाशत ॥ १७२०

४ ८ ३ ०४०१a यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
४ ८ ३ ०४०१c आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ १७२१
४ ८ ३ ०४०२a मन्दन्तु त्वा मघवन्निन्द्रेन्दवो राधोदेयाय सुन्वते ।
४ ८ ३ ०४०२c आमुष्या सोममपिबश्चमू सुतं ज्येष्ठं तद्दधिषे सहः ॥ १७२२

४ ८ ३ ०५०१a त्वमङ्ग प्र शँसिषो देवः शविष्ठ मर्त्यम् ।
४ ८ ३ ०५०१c न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः ॥ १७२३
४ ८ ३ ०५०२a मा ते राधाँसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् ।
४ ८ ३ ०५०२c विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥ १७२४

४ ८ ३ ०६०१a प्रति ष्या सूनरी जनी व्युच्छन्ती परि स्वसुः ।
४ ८ ३ ०६०१c दिवो अदर्शि दुहिता ॥ १७२५
४ ८ ३ ०६०२a अश्वेव चित्रारुषी माता गवामृतावरी ।
४ ८ ३ ०६०२c सखा भूदश्विनोरुषाः ॥ १७२६
४ ८ ३ ०६०३a उत सखास्यश्विनोरुत माता गवामसि ।
४ ८ ३ ०६०३c उतोषो वस्व ईशिषे ॥ १७२७

४ ८ ३ ०७०१a एषो उषा अपूर्व्य व्युच्छति प्रिया दिवः ।
४ ८ ३ ०७०१c स्तुषे वामश्विना बृहत् ॥ १७२८
४ ८ ३ ०७०२a या दस्रा सिन्धुमातरा मनोतरा रयीणाम् ।
४ ८ ३ ०७०२c धिया देवा वसुविदा ॥ १७२९
४ ८ ३ ०७०३a वच्यन्ते वां ककुहासो जूर्णायामधि विष्टपि ।
४ ८ ३ ०७०३c यद्वाँ रथो विभिष्पतात् ॥ १७३०

४ ८ ३ ०८०१a उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति ।
४ ८ ३ ०८०१c येन तोकं च तनयं च धामहे ॥ १७३१
४ ८ ३ ०८०२a उषो अद्येह गोमत्यश्वावति विभावरि ।
४ ८ ३ ०८०२c रेवदस्मे व्युच्छ सूनृतावति ॥ १७३२
४ ८ ३ ०८०३a युङ्क्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः ।
४ ८ ३ ०८०३c अथा नो विश्वा सौभगान्या वह ॥ १७३३

४ ८ ३ ०९०१a अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत् ।
४ ८ ३ ०९०१c अर्वाग्रथँ समनसा नि यच्छतम् ॥ १७३४
४ ८ ३ ०९०२a एह देवा मयोभुवा दस्रा हिरण्यवर्त्तनी ।
४ ८ ३ ०९०२c उषर्बुधो वहन्तु सोमपीतये ॥ १७३५
४ ८ ३ ०९०३a यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः ।
४ ८ ३ ०९०३c आ न ऊर्जं वहतमश्विना युवम् ॥ १७३६

४ ८ ३ १००१a अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
४ ८ ३ १००१c अस्तमर्वन्त आशवोस्तं नित्यासो वाजिन इषँ स्तोतृभ्य आ भर ॥ १७३७
४ ८ ३ १००२a अग्निर्हि वाजिनं विशे ददाति विश्वचर्षणिः ।
४ ८ ३ १००२c अग्नी राये स्वाभुवँ स प्रीतो याति वार्यमिषँ स्तोतृभ्य आ भर ॥ १७३८
४ ८ ३ १००३a सो अग्निर्यो वसुर्गृणे सं यमायन्ति धेनवः ।
४ ८ ३ १००३c समर्वन्तो रघुद्रुवः सँ सुजातासः सूरय इषँ स्तोतृभ्य आ भर ॥ १७३९

४ ८ ३ ११०१a महे नो अद्य बोधयोषो राये दिवित्मती ।
४ ८ ३ ११०१c यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १७४०
४ ८ ३ ११०२a या सुनीथे शौचद्रथे व्यौच्छो दुहितर्दिवः ।
४ ८ ३ ११०२c सा व्युच्छ सहीयसि सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ १७४१
४ ८ ३ ११०३a सा नो अद्याभरद्वसुर्व्युच्छा दुहितर्दिवः ।
४ ८ ३ ११०३c यो व्यौच्छः सहीयसि सत्यश्रवसि याय्ये सुजाते अश्वसूनृते ॥ १७४२

४ ८ ३ १२०१a प्रति प्रियतमँ रथं वृशणं वसुवाहनम् ।
४ ८ ३ १२०१c स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतँ हवम् ॥ १७४
४ ८ ३ १२०२a अत्यायातमश्विना तिरो विश्वा अहँ सना ।
४ ८ ३ १२०२c दस्रा हिरण्यवर्त्तनी सुषुम्णा सिन्धुवाहसा माध्वी मम श्रुतँ हवम् ॥ १७४४
४ ८ ३ १२०३a आ नो रत्नानि बिभ्रतावश्विना गच्छतं युवम् ।
४ ८ ३ १२०३c रुद्रा हिरण्यवर्त्तनी जुषाणा वाजिनीवसू माध्वी मम श्रुतँ हवम् ॥ १७४५

४ ८ ३ १३०१a अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
४ ८ ३ १३०१c यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥ १७४६
४ ८ ३ १३०२a अबोधि होता यजथाय देवानूर्ध्वो अग्निः सुमनाः प्रातरस्थात् ।
४ ८ ३ १३०२c समिद्धस्य रुशददर्शि पाजो महान्देवस्तमसो निरमोचि ॥ १७४७
४ ८ ३ १३०३a यदीं गणस्य रशनामजीगः शुचिरङ्क्ते शुचिभिर्गोभिरग्निः ।
४ ८ ३ १३०३c आद्दक्षिणा युज्यते वाजयन्त्युत्तानामूर्ध्वो अधयज्जुहूभिः ॥ १७४८

४ ८ ३ १४०१a इदँ श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
४ ८ ३ १४०१c यथा प्रसूता सवितुः सवायैवा रात्र्युषसे योनिमारैक् ॥ १७४९
४ ८ ३ १४०२a रुशाद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
४ ८ ३ १४०२c समानबन्धू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ १७५०
४ ८ ३ १४०३a समानो अध्वा स्वस्रोरनन्तस्तमन्यान्या चरतो देवशिष्टे ।
४ ८ ३ १४०३c न मेथेते न तस्थतुः सुमेके नक्तोषासा समनसा विरूपे ॥ १७५१

४ ८ ३ १५०१a आ भात्यग्निरुषसामनीकमुद्विप्राणां देवया वाचो अस्थुः ।
४ ८ ३ १५०१c अर्वाञ्चा नूनँ रथ्येह यातं पीपिवाँसमश्विना घर्ममच्छ ॥ १७५२
४ ८ ३ १५०२a न सँस्कृतं प्र मिमीतो गमिष्ठान्ति नूनमश्विनोपस्तुतेह ।

४ ८ ३ १५०२c दिवाभिपित्वेवसागमिष्ठा प्रत्यवर्त्तिं दाशुषे शम्भविष्ठा ॥ १७५३
४ ८ ३ १५०३a उता यातँ सङ्गवे प्रातरह्नो मध्यन्दिन उदिता सूर्यस्य ।
४ ८ ३ १५०३c दिवा नक्तमवसा शन्तमेन नेदानीं पीतिरश्विना ततान ॥ १७५४

४ ८ ३ १६०१a एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमञ्जते ।
४ ८ ३ १६०१c निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यन्ति मातरः ॥ १७५५
४ ८ ३ १६०२a उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
४ ८ ३ १६०२c अक्रन्नुषासो वयुनानि पूर्वथा रुशन्तं भानुमरुषीरशिश्रयुः ॥ १७५६
४ ८ ३ १६०३a अर्चन्ति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।
४ ८ ३ १६०३c इषं वहन्तीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥ १७५७

४ ८ ३ १७०१a अबोध्यग्निर्ज्म उदेति सूर्यो व्यू३षाश्चन्द्रा मह्यावो अर्चिषा ।
४ ८ ३ १७०१c आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक् ॥ १७५८
४ ८ ३ १७०२a यद्युञ्जाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतम् ।
४ ८ ३ १७०२c अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि ॥ १७५९
४ ८ ३ १७०३a अर्वाङ्त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः ।
४ ८ ३ १७०३c त्रिवन्धुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे ॥ १७६०

४ ८ ३ १८०१a प्र ते धारा असश्चतो दिवो न यन्ति वृष्टयः ।
४ ८ ३ १८०१c अच्छा वाजँ सहस्रिणम् ॥ १७६१
४ ८ ३ १८०२a अभि प्रियाणि काव्या विश्वा चक्षाणो अर्षति ।
४ ८ ३ १८०२c हरिस्तुञ्जान आयुधा ॥ १७६२
४ ८ ३ १८०३a स मर्मृजान आयुभिरिभो राजेव सुव्रतः ।
४ ८ ३ १८०३c श्येनो न वँसु षीदति ॥ १७६३
४ ८ ३ १८०४a स नो विश्वा दिवो वसूतो पृथिव्या अधि ।
४ ८ ३ १८०४c पुनान इन्दवा भर ॥ १७६४

नवम प्रपाठकः । प्रथमोऽर्धः

४ ९ १ ०१०१a प्रास्य धारा अक्षरन्वृष्णः सुतस्यौजसा ।
४ ९ १ ०१०१c देवाँ अनु प्रभूषतः ॥ १७६५
४ ९ १ ०१०२a सप्तिं मृजन्ति वेधसो गृणन्तः कारवो गिरा ।
४ ९ १ ०१०२c ज्योतिर्जज्ञानमुक्थ्यम् ॥ १७६६
४ ९ १ ०१०३a सुषहा सोम तानि ते पुनानाय प्रभूवसो ।
४ ९ १ ०१०३c वर्धा समुद्रमुक्थ्यम् ॥ १७६७

४ ९ १ ०२०१a एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ १७६८
४ ९ १ ०२०२a त्वामिच्छवसस्पते यन्ति गिरो न संयतः ॥ १७६९
४ ९ १ ०२०३a वि स्रुतयो यथा पथा इन्द्र त्वद्यन्तु रातयः ॥ १७७०

४ ९ १ ०३०१a आ त्वा रथं यथोतये सुम्नाय वर्त्तयामसि ।
४ ९ १ ०३०१c तुविकूर्मिमृतीषहमिन्द्रं शविष्ठ सत्पतिम् ॥ १७७१
४ ९ १ ०३०२a तुविशुष्म तुविक्रतो शचीवो विश्वया मते ।
४ ९ १ ०३०२c आ पप्राथ महित्वना ॥ १७७२
४ ९ १ ०३०३a यस्य ते महिना महः परि ज्मायन्तमीयतुः ।
४ ९ १ ०३०३c हस्ता वज्रँ हिरण्ययम् ॥ १७७३

४ ९ १ ०४०१a आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्व ।
४ ९ १ ०४०१c सूरो न रुरुक्वाञ्छतात्मा ॥ १७७४
४ ९ १ ०४०२a अभि द्विजन्मा त्री रोचनानि विश्वा रजाँसि शुशुचनो अस्थात् ।
४ ९ १ ०४०२c होता यजिष्ठो अपाँ सधस्थे ॥ १७७५
४ ९ १ ०४०३a अयँ स होता यो द्विजन्मा विश्वा दधे वार्याणि श्रवस्या ।
४ ९ १ ०४०३c मर्तो यो अस्मै सुतुको ददाश ॥ १७७६

४ ९ १ ०५०१a अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रँ हृदिस्पृषम् ।
४ ९ १ ०५०१c ऋध्यामा त ओहैः ॥ १७७७
४ ९ १ ०५०२a अधा ह्यग्ने क्रतोर्भद्रस्य दक्षस्य साधोः ।
४ ९ १ ०५०२c रथीर्ऋतस्य बृहतो बभूथ ॥ १७७८
४ ९ १ ०५०३a एभिर्नो अर्कैर्भवा नो अर्वाङ्क्स्व३र्ण ज्योतिः ।
४ ९ १ ०५०३c अग्ने विश्वेभिः सुमना अनीकैः ॥ १७७९

४ ९ १ ०६०१a अग्ने विवस्वदुषसश्चित्रँ राधो अमर्त्य ।
४ ९ १ ०६०१c आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥ १७८०
४ ९ १ ०६०२a जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणाम् ।
४ ९ १ ०६०२c सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥ १७८१

४ ९ १ ०७०१a विधुं दद्राणँ समने बहूनां युवानँ सन्तं पलितो जगार ।
४ ९ १ ०७०१c देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ १७८२
४ ९ १ ०७०२a शाक्मना शाको अरुणः सुपर्ण आ यो महः शूरः सनादनीडः ।
४ ९ १ ०७०२c यच्चिकेत सत्यमित्तन्न मोघं वसु स्पार्हमुत जेतोत दाता ॥ १७८३
४ ९ १ ०७०३a ऐभिर्ददे वृष्ण्या पौँस्यानि येभिरौक्षद्वृत्रहत्याय वज्री ।
४ ९ १ ०७०३c ये कर्मणः क्रियमाणस्य मह्न ऋतेकर्ममुदजायन्त देवाः ॥ १७८४

४ ९ १ ०८०१a अस्ति सोमो अयँ सुतः पिबन्त्यस्य मरुतः ।
४ ९ १ ०८०१c उत स्वराजो अश्विना ॥ १७८५
४ ९ १ ०८०२a पिबन्ति मित्रो अर्यमा तना पूतस्य वरुणः ।
४ ९ १ ०८०२c त्रिषधस्थस्य जावतः ॥ १७८६

४ ९ १ ०८०३a उतो न्वस्य जोषमा इन्द्रः सुतस्य गोमतः ।
४ ९ १ ०८०३c प्रातर्होतेव मत्सति ॥ १७८७

४ ९ १ ०९०१a बण्महाँ असि सूर्य बडादित्य महाँ असि ।
४ ९ १ ०९०१c महस्ते सतो महिमा पनिष्टम मह्ना देव महाँ असि ॥ १७८८
४ ९ १ ०९०२a बट् सूर्य श्रवसा महाँ असि सत्रा देव महाँ असि ।
४ ९ १ ०९०२c मह्ना देवानामसुर्यः पुरोहितो विभु ज्योतिरदाभ्यम् ॥ १७८९

४ ९ १ १००१a उप नो हरिभिः सुतं याहि मदानां पते ।
४ ९ १ १००१c उप नो हरिभिः सुतम् ॥ १७९०
४ ९ १ १००२a द्विता यो वृत्रहन्तमो विद इन्द्रः शतक्रतुः ।
४ ९ १ १००२c उप नो हरिभिः सुतम् ॥ १७९१
४ ९ १ १००३a त्वँ हि वृत्रहन्नेषां पाता सोमानामसि ।
४ ९ १ १००३c उप नो हरिभिः सुतम् ॥ १७९२

४ ९ १ ११०१a प्र वो महे महेवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
४ ९ १ ११०१c विशः पूर्वीः प्र चर चर्षणिप्राः ॥ १७९३
४ ९ १ ११०२a उरुव्यचसे महिने सुवृक्तिमिन्द्राय ब्रह्म जनयन्त विप्राः ।
४ ९ १ ११०२c तस्य व्रतानि न मिनन्ति धीराः ॥ १७९४
४ ९ १ ११०३a इन्द्रं वाणीरनुत्तमन्युमेव सत्रा राजानं दधिरे सहध्यै ।
४ ९ १ ११०३c हर्यश्वाय बर्हया समापीन् ॥ १७९५

४ ९ १ १२०१a यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
४ ९ १ १२०१c स्तोतारमिद्दधिषे रदावसो न पापत्वाय रँसिषम् ॥ १७९६
४ ९ १ १२०२a शिक्षेयमिन्महयते दिवेदिवे राय आ कुहचिद्विदे ।
४ ९ १ १२०२c न हि त्वदन्यन्मघवन्न आप्यं वस्यो अस्ति पिता च न ॥ १७९७

४ ९ १ १३०१a श्रुधी हवं विपिपानस्याद्रेर्बोधा विप्रस्यार्चतो मनीषाम् ।
४ ९ १ १३०१c कृष्वा दुवाँस्यन्तमा सचेमा ॥ १७९८
४ ९ १ १३०२a न ते गिरो अपि मृष्ये तुरस्य न सुष्टुतिमसुर्यस्य विद्वान् ।
४ ९ १ १३०२c सदा ते नाम स्वयशो विवक्मि ॥ १७९९
४ ९ १ १३०३a भूरि हि ते सवना मानुषेषु भूरि मनीषी हवते त्वामित् ।
४ ९ १ १३०३c मारे अस्मन्मघवञ्ज्योकः ॥ १८००

४ ९ १ १४०१a प्रो ष्वस्मै पुरोरथमिन्द्राय शूषमर्चत ।
४ ९ १ १४०१c अभीके चिदु लोककृत्सङ्गे समत्सु वृत्रह ।
४ ९ १ १४०१e अस्माकं बोधि चोदिता नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १८०१
४ ९ १ १४०२a त्वँ सिन्धूँरवासृजोऽधराचो अहन्नहिम् ।

४ ९ १ १४०२c  अशत्रुरिन्द्र जज्ञिषे विश्वं पुष्यसि वार्यम् ।
४ ९ १ १४०२e  तं त्वा परि ष्वजामहे नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १८०२
४ ९ १ १४०३a  वि षु विश्वा अरातयोऽर्यो नशन्त नो धियः ।
४ ९ १ १४०३c  अस्तासि शत्रवे वधं यो न इन्द्र जिघाँसति ।
४ ९ १ १४०३e  या ते रातिर्ददिवसु नभन्तामन्यकेषां ज्याका अधि धन्वसु ॥ १८०३

४ ९ १ १५०१a  रेवाँ इद्रेवत स्तोता स्यात्त्वावतो मघोनः ।
४ ९ १ १५०१c  प्रेदु हरिवः सुतस्य ॥ १८०४
४ ९ १ १५०२a  उक्थं च न शस्यमानं नागो रयिरा चिकेत ।
४ ९ १ १५०२c  न गायत्रं गीयमानम् ॥ १८०५
४ ९ १ १५०३a  मा न इन्द्र पीयत्नवे मा शर्धते परा दाः ।
४ ९ १ १५०३c  शिक्षा शचीवः शचीभिः ॥ १८०६

४ ९ १ १६०१a  एन्द्र याहि हरिभिरुप कण्वस्य सुष्टुतिम् ।
४ ९ १ १६०१c  दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १८०७
४ ९ १ १६०२a  अत्रा वि नेमिरेषामुरां न धूनुते वृकः ।
४ ९ १ १६०२c  दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १८०८
४ ९ १ १६०३a  आ त्वा ग्रावा वदनीह सोमी घोषेण वक्षतु ।
४ ९ १ १६०३c  दिवो अमुष्य शासतो दिवं यय दिवावसो ॥ १८०९

४ ९ १ १७०१a  पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥ १८१०
४ ९ १ १७०२a  ते सुतासो विपश्चितः शुक्रा वायुमसृक्षत ॥ १८११
४ ९ १ १७०३a  असृग्रं देववीतये वाजयन्तो रथा इव ॥ १८१२

४ ९ १ १८०१a  अग्निं होतारं मन्ये दास्वन्तं वसोः सूनुं सहसो जातवेदसं विप्रं न जातवेद
४ ९ १ १८०१c  य ऊर्ध्वरो स्वध्वरो देवो देवाच्या कृपा ।
४ ९ १ १८०१e  घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ १८१३
४ ९ १ १८०२a  यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमङ्गिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्म
४ ९ १ १८०२c  परिज्मानमिव द्याँ होतारं चर्षणीनाम् ।
४ ९ १ १८०२e  शोचिष्केशं वृषणं यमिमा विशः प्रावन्तु जूतये विशः ॥ १८१४
४ ९ १ १८०३a  स हि पुरू चिदोजसा विरुक्मता दीद्यानो भवति द्रुहन्तरः परशुर्न द्रुहन्तरः
४ ९ १ १८०३c  वीडु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरम् ।
४ ९ १ १८०३e  निष्षहमाणो यमते नायते धन्वासहा नायते ॥ १८१५

नवम प्रपाठकः । द्वितीयोऽर्धः

४ ९ २ ०१०१a  अग्ने तव श्रवो वयो महि भ्राजन्ते अर्चयो विभावसो ।
४ ९ २ ०१०१c  बृहद्भानो शवसा वाजमुक्थ्य३ं दधासि दाशुषे कवे ॥ १८१६
४ ९ २ ०१०२a  पावकवर्चाः शुक्रवर्चा अनूनवर्चा उदियर्षि भानुना ।

४ ९ २ ०१०२c पुत्रो मातरा विचरन्नुपावसि पृणक्षि रोदसी उभे ॥ १८१७
४ ९ २ ०१०३a ऊर्जो नपाज्जातवेदः सुशस्तिभिर्मन्दस्व धीतिभिर्हितः ।
४ ९ २ ०१०३c त्वे इषः सं दधुर्भूरिवर्पसश्चित्रोतयो वामजाताः ॥ १८१८
४ ९ २ ०१०४a इरज्यन्नग्ने प्रथयस्व जन्तुभिरस्मे रायो अमर्त्य ।
४ ९ २ ०१०४c स दर्शतस्य वपुषो वि राजसि पृणक्षि दर्शतं क्रतुम् ॥ १८१९
४ ९ २ ०१०५a इष्कर्त्तारमध्वरस्य प्रचेतसं क्षयन्तँ राधसो महः ।
४ ९ २ ०१०५c रातिं वामस्य सुभगां महीमिषं दधासि सानसिँ रयिम् ॥ १८२०
४ ९ २ ०१०६a ऋतावानं महिषं विश्वदर्शतमग्निँ सुम्नाय दधिरे पुरो जनाः ।
४ ९ २ ०१०६c श्रुत्कर्णँ सप्रथस्तमं त्वा गिरा दैव्यं मानुषा युगा ॥ १८२१

४ ९ २ ०२०१a प्र सो अग्ने तवोतिभिः सुविराभिस्तरति वाजकर्मभिः ।
४ ९ २ ०२०१c यस्य त्वँ सख्यमाविथ ॥ १८२२
४ ९ २ ०२०२a तव द्रप्सो नीलवान्वाश ऋत्विय इन्धानः सिष्णवा ददे ।
४ ९ २ ०२०२c त्वं महीनामुषसामसि प्रियः क्षपो वस्तुषु राजसि ॥ १८२३

४ ९ २ ०३०१a तमोषधीर्दधिरे गर्भमृत्वियं तमापो अग्निं जनयन्त मातरः ।
४ ९ २ ०३०१c तमित्समानं वनिनश्च वीरुधोऽन्तर्वतीश्च सुवते च विश्वहा ॥ १८२४

४ ९ २ ०४०१a अग्निरिन्द्राय पवते दिवि शुक्रो वि राजति ।
४ ९ २ ०४०१c महिषीव वि जायते ॥ १८२५

४ ९ २ ०५०१a यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति ।
४ ९ २ ०५०१c यो जागार तमयँ सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १८२६

४ ९ २ ०६०१a अग्निर्जागार तमृचः कामयन्तेग्निर्जागार तमु सामानि यन्ति ।
४ ९ २ ०६०१c अग्निर्जागार तमयँ सोम आह तवाहमस्मि सख्ये न्योकाः ॥ १८२७

४ ९ २ ०७०१a नमः सखिभ्यः पूर्वसद्भ्यो नमः साकन्निषेभ्यः ।
४ ९ २ ०७०१c युञ्जे वाचँ शतपदीम् ॥ १८२८
४ ९ २ ०७०२a युञ्जे वाचँ शतपदीं गाये सहस्रवर्त्तनि ।
४ ९ २ ०७०२c गायत्रं त्रैष्टुभं जगत् ॥ १८२९
४ ९ २ ०७०३a गायत्रं त्रैष्टुभं जगद्विश्वा रूपाणि सम्भृता ।
४ ९ २ ०७०३c देवा ओकाँसि चक्रिरे ॥ १८३०

४ ९ २ ०८०१a अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः ।
४ ९ २ ०८०१c सूर्यो ज्योतिर्ज्योतिः सूर्यः ॥ १८३१
४ ९ २ ०८०२a पुनरूर्जा नि वर्त्तस्व पुनरग्न इषायुषा ।
४ ९ २ ०८०२c पुनर्नः पाह्यँहसः ॥ १८३२

४ ९ २ ०८०३a सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया ।
४ ९ २ ०८०३c विश्वप्स्न्या विश्वतस्परि ॥ १८३३

४ ९ २ ०९०१a यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।
४ ९ २ ०९०१c स्तोता मे गोसखा स्यात् ॥ १८३४
४ ९ २ ०९०२a शिक्षेयमस्मै दित्सेयँ शचीपते मनीषिणे ।
४ ९ २ ०९०२c यदहं गोपतिः स्याम् ॥ १८३५
४ ९ २ ०९०३a धेनुष्ट इन्द्र सूनृता यजमानाय सुन्वते ।
४ ९ २ ०९०३c गामश्वं पिप्युषी दुहे ॥ १८३६

४ ९ २ १००१a आपो हि ष्ठा मयोभुवस्ता न ऊर्जे दधातन ।
४ ९ २ १००१c महे रणाय चक्षसे ॥ १८३७
४ ९ २ १००२a यो वः शिवतमो रसस्तस्य भाजयतेह नः ।
४ ९ २ १००२c उशतीरिव मातरः ॥ १८३८
४ ९ २ १००३a तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
४ ९ २ १००३c आपो जनयथा च नः ॥ १८३९

४ ९ २ ११०१a वात आ वातु बेषजँ शम्भु मयोभु नो हृदे ।
४ ९ २ ११०१c प्र न अयूँषि तारिषत् ॥ १८४०
४ ९ २ ११०२a उत वात पितासि न उत भ्रातोत नः सखा ।
४ ९ २ ११०२c स नो जीवातवे कृधि ॥ १८४१
४ ९ २ ११०३a यददो वात ते गृहे३ऽमृतं निहितं गुहा ।
४ ९ २ ११०३c तस्यो नो देहि जीवसे ॥ १८४२

४ ९ २ १२०१a अभि वाजी विश्वरूपो जनित्रँ हिरण्ययं बिभ्रदत्कँ सुपर्णः ।
४ ९ २ १२०१c सूर्यस्य भानुमृतुथा वसानः परि स्वयं मेधमृज्रो जजान ॥ १८४३
४ ९ २ १२०२a अप्सु रेतः शिश्रिये विश्वरूपं तेजः पृथिव्यामधि यत्सम्बभूव ।
४ ९ २ १२०२c अन्तरिक्षे स्वं महिमानं मिमानः कनिक्रन्ति वृष्णो अश्वस्य रेतः ॥ १८४४
४ ९ २ १२०३a अयँ सहस्रा परि युक्ता वसानः सूर्यस्य भानुं यज्ञो दाधार ।
४ ९ २ १२०३c सहस्रदाः शतदा भूरिदावा धर्त्ता दिवो भुवनस्य विश्पतिः ॥ १८४५

४ ९ २ १३०१a नाके सुपर्णमुप यत्पतन्तँ हृदा वेनन्तो अभ्यचक्षत त्वा ।
४ ९ २ १३०१c हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ १८४६
४ ९ २ १३०२a ऊर्ध्वो गन्धर्वो अधि नाके अस्थात्प्रत्यङ्चित्रा बिभ्रदस्यायुधानि ।
४ ९ २ १३०२c वसानो अत्कँ सुरभिं दृशे कँ स्व३र्ण नाम जनत प्रियाणि ॥ १८४७
४ ९ २ १३०३a द्रप्सः समुद्रमभि यज्जिगाति पश्यन्गृध्रस्य चक्षसा विधर्मन् ।
४ ९ २ १३०३c भानुः शुक्रेण शोचिषा चकानस्तृतीये चक्रे रजसि प्रियाणि ॥ १८४८

नवम प्रपाठकः । तृतीयोऽर्धः

४ ९ ३ ०१०१a आशुः शिशानो वृषभो न भीमो घनाघनः क्षोभणश्चर्षणीनाम् ।
४ ९ ३ ०१०१c सङ्क्रन्दनोऽनिमिष एकवीरः शतँ सेना अजयत्साकमिन्द्रः ॥ १८४९
४ ९ ३ ०१०२a सङ्क्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
४ ९ ३ ०१०२c तदिन्द्रेण जयत तत्सहध्वं युधो नर इषुहस्तेन वृष्णा ॥ १८५०
४ ९ ३ ०१०३a स इषुहस्तैः स निषङ्गिभिर्वशी सँस्रष्टा स युध इन्द्रो गणेन ।
४ ९ ३ ०१०३c सँ सृष्टजित्सोमपा बाहुशर्ध्यू३ग्रधन्वा प्रतिहिताभिरस्ता ॥ १८५१

४ ९ ३ ०२०१a बृहस्पते परि दीया रथेन रक्षोहामित्राँ अपबाधमानः ।
४ ९ ३ ०२०१c प्रभञ्जन्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥ १८५२
४ ९ ३ ०२०२a बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजी सहमान उग्रः ।
४ ९ ३ ०२०२c अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥ १८५३
४ ९ ३ ०२०३a गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ।
४ ९ ३ ०२०३c इमँ सजाता अनु वीरयध्वमिन्द्रँ सखायो अनु सँ रभध्वम् ॥ १८५४

४ ९ ३ ०३०१a अभि गोत्राणि सहसा गाहमानोऽदयो वीरः शतमन्युरिन्द्रः ।
४ ९ ३ ०३०१c दुश्च्यवनः पृतनाषाडयुध्यो३ऽस्माकँ सेना अवतु प्र युत्सु ॥ १८५५
४ ९ ३ ०३०२a इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
४ ९ ३ ०३०२c देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ १८५६
४ ९ ३ ०३०३a इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताँ शर्ध उग्रम् ।
४ ९ ३ ०३०३c महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ १८५७

४ ९ ३ ०४०१a उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनाँसि ।
४ ९ ३ ०४०१c उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः ॥ १८५८
४ ९ ३ ०४०२a अस्माकमिन्द्रः समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।
४ ९ ३ ०४०२c अस्माकं वीरा उत्तरे भवन्त्वस्माँ उ देवा अवता हवेषु ॥ १८५९
४ ९ ३ ०४०३a असौ या सेना मरुतः परेषामभ्येति न ओजसा स्पर्धमाना ।
४ ९ ३ ०४०३c तां गूहत तमसापव्रतेन यथैतेषामन्यो अन्यं न जानात् ॥ १८६०

४ ९ ३ ०५०१a अमीषां चित्तं प्रतिलोभयन्ती गृहाणाङ्गान्यप्वे परेहि ।
४ ९ ३ ०५०१c अभि प्रेहि निर्दह हृत्सु शोकैरन्धेनामित्रास्तमसा सचन्ताम् ॥ १८६१
४ ९ ३ ०५०२a प्रेता जयता नर इन्द्रो वः शर्म यच्छतु ।
४ ९ ३ ०५०२c उग्रा वः सन्तु बाहवोऽनाधृष्या यथासथ ॥ १८६२
४ ९ ३ ०५०३a अवसृष्टा परा पत शरव्ये ब्रह्मसँशिते ।
४ ९ ३ ०५०३c गच्छामित्रान्प्र पद्यस्व मामीषां कं च नोच्छिषः ॥ १८६३

४ ९ ३ ०६०१a कङ्काः सुपर्णा अनु यन्त्वेनान्गृध्राणामन्नमसावस्तु सेना ।
४ ९ ३ ०६०१c मैषां मोच्यघहारश्च नेन्द्र वयाँस्येनाननुसंयन्तु सर्वान् ॥ १८६४

४ ९ ३ ०६०२a अमित्रसेनां मघवन्नस्माञ्छत्रुयतीमभि ।

४ ९ ३ ०६०२c उभौ तामिन्द्र वृत्रहन्नग्निश्च दहतं प्रति ॥ १८६५

४ ९ ३ ०६०३a यत्र बाणाः सम्पतन्ति कुमारा विशिखा इव ।

४ ९ ३ ०६०३c तत्रा नो ब्रह्मणस्पतिरदितिः शर्म यच्छतु विश्वाहा शर्म यच्छतु ॥ १८६६

४ ९ ३ ०७०१a वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।

४ ९ ३ ०७०१c वि मन्युमिन्द्र वृत्रहन्नमित्रस्याभिदासतः ॥ १८६७

४ ९ ३ ०७०२a वि न इन्द्र मृधो जहि नीचा यच्छ पृतन्यतः ।

४ ९ ३ ०७०२c यो अस्माँ अभिदासत्यधरं गमया तमः ॥ १८६८

४ ९ ३ ०७०३a इन्द्रस्य बाहू स्थविरौ युवानावनाधृष्यौ सुप्रतीकावसह्यौ ।

४ ९ ३ ०७०३c तौ युञ्जीत प्रथमौ योग आगते याभ्यां जितमसुराणाँ सहो महत् ॥ १८६९

४ ९ ३ ०८०१a मर्माणि ते वर्मणा च्छादयामि सोमस्त्वा राजामृतेनानु वस्ताम् ।

४ ९ ३ ०८०१c उरोर्वरीयो वरुणस्ते कृणोतु जयन्तं त्वानु देवा मदन्तु ॥ १८७०

४ ९ ३ ०८०२a अन्धा अमित्रा भवताशीर्षाणोऽहय इव ।

४ ९ ३ ०८०२c तेषां वो अग्निनुन्नानामिन्द्रो हन्तु वरंवरम् ॥ १८७१

४ ९ ३ ०८०३a यो नः स्वोऽरणो यश्च निष्ट्यो जिघाँसति ।

४ ९ ३ ०८०३c देवास्तँ सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरँ शर्म वर्म ममान्तरम् ॥ १८७२

४ ९ ३ ०९०१a मृगो न भीमः कुचरो गिरिष्ठाः परावत आ जगन्था परस्याः ।

४ ९ ३ ०९०१c सृकँ सँशाय पविमिन्द्र तिग्मं वि शत्रूं ताढि वि मृधो नुदस्व ॥ १८७३

४ ९ ३ ०९०२a भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।

४ ९ ३ ०९०२c स्थिरैरङ्गैस्तुष्टुवाँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ १८७४

४ ९ ३ ०९०३a स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।

४ ९ ३ ०९०३c स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

४ ९ ३ ०९०३e ॐ स्वस्ति नो बृहस्पतिर्दधातु ॥ १८७५

॥ इत्युत्तरार्चिकः ॥

॥ इति सामवेदसंहिता समाप्ता ॥

Encoded and proofread by Anshuman Pandey pandey at umich.edu

```
% Text title            : sAmaveda saMhitA kauthuma shAkhA
% File name             : sv-kauthuma.itx
% itxtitle              : sAmaveda saMhitA kauthuma shAkhA
% engtitle              : Samaveda Samhita Kauthuma ShAkha
% Category              : veda, svara
% Location              : doc_veda
% Sublocation           : veda
% Texttype              : svara
% Language              : Sanskrit
% Subject               : philosophy/hinduism/religion
% Transliterated by     : Anshuman Pandey pandey at umich.edu
% Proofread by          : Anshuman Pandey pandey at umich.edu
% Latest update         : March 8, 1998, September 10, 2014
% Send corrections to   : Sanskrit@cheerful.com
% Site access           : http://sanskritdocuments.org
```